श्रीमते रामानन्दायनमः



**धार्मिक महानुभाव !**

'धर्मस्य तत्त्वं निहितं गुहायाम्' यह जो भगवती श्रुतिका कथन है इसकी सत्यता मानव-सृष्टिमें प्रतिक्षण प्रमाणित हो रही है और प्रलयान्त होती रहेगी। हमारे धार्मिक ग्रन्थ आज विलुप्त-प्राय हो चुके हैं। हमारी धार्मिक मर्यादा हमारे आलस्यसे दूसरोंके हाथकी पतङ्ग हो चुकी है। हम उस कठपुतलीके समान हो चुके हैं जो दूसरोंके चलानेसे चलती है और बैठानेसे बैठती है। हमने अबसे पहले कभी इसलिये प्रयत्न नहीं कियाथा कि हमभी संसारमें सर्वोच्च और साम्प्रदायिक गिने जावें। परन्तु अब हम नये युगमें हैं। सारा संसार जागृत है। हमभी बहुत दिन तक सोये नहीं रह सकते थे। प्रत्येक पदार्थकी सीमा है अतः सोनेकी भी सीमा होनी चाहिये। वह सीमा समाप्त हो गई, अबतो अपने धर्म, कर्म, रूप, मर्यादा सभी पदार्थोंकी गवेषणा करनी है। ऐसा करनेसे हम उसी रेखापर खडे रह जावेंगे जहां रहकर हमने अपनी उन्नतिका मार्ग भुला दिया

है, जहां रहकर हमने अपने ज्ञान–सूर्यको अस्त होते देखाथा, जहांसे हमें 'पन्थाई' की उपाधि मिलीथी और जहां रहकर हमने इस कलाङ्कित उपाधिको स्वीकार कर लियाथा। अतः हमारा कर्तव्य है कि हम अपनी सभी बातोंका अन्वेषण करें। अन्वेषणसे निश्चयही हम अपने उन रत्नोंको उपलब्ध करेंगे जिनके विना आज हमारा कोष शून्य है, जिनके विना हम अन्धकारमय जीवन व्यतीत कर रहे हैं, और जिनके विना हम अपनी जगहसे तिलमात्रभी आगे नहीं बढ़ सकते। हमें एक हिन्दी कविके इस वचनको कभी भी नहीं भूलना चाहिये कि "जिन खोजा तिन पाइयां गहरे पानी पैठ।" आज आपने घोर परिश्रम किया, देखिये आपके हाथमें एक ऐसा समुज्ज्वल रत्न आया जिसके चाकचिक्यसे अन्धकार तिरोहित हो गया। अपना स्वरूप झलक गया। स्वरूपावस्थान हो गया। इस महार्घ्य रत्नका नाम है 'श्रीमद्वाल्मीकिसंहिता'।

इस संहिताको मुद्रित और प्रकाशित करनेकेलिये परमार्थ परायण, दर्शन निधि, तार्किकप्रवर, हमारे परममित्र वेदान्तिशिरोमणि पण्डित श्रीरघुवरदासवेदान्तीजी महाराजने प्रतिज्ञा करके मुद्रणकार्य्य आरम्भ कर दिया और उसके संशोधनका दुर्वहकार्य मुझे सौंप दिया। मैंने

यथा शक्ति इसकार्यका सम्पादन किया है । मूल पुस्तकके पत्रे अत्यन्त जीर्ण थे, कितनेही स्थल पर लेखभी अस्पष्ट थे, अतः ऐसे स्थलोंको मैंने खाली ही रहने दिया है । प्राप्त दोनों पुस्तकोंमें जो कुछ पाठान्तर था उसेभी टिप्पणीमें दिखा दिया है ।

महानुभाव ! अशुद्धियोंके संसर्गसे इस ग्रन्थको पृथक् रखनेकेलिये पूर्ण उद्योग करने परभी स्वाभाविक निर्बलताके कारण मुझे सफलता नहीं प्राप्त हुई । कितनेही स्थलोंमें छोटी २ अशुद्धियां और दो एक स्थलोंमें अचिन्त्य बडी २ अशुद्धियां रह गई हैं । यथासम्भव शुद्धाशुद्धनिदर्शक पत्र लगा दिया है परन्तु; तथापि मानवसुलभ भूलोंके लिये 'हसिष्यन्ति खलास्तत्र समाधास्यन्ति सज्जनाः' इस वचन पर विश्वास रखकर विराम लेनेके लिये आप सज्जनोंसे आज्ञा लेता हूं ।

अहमदावाद.<br>
पौष शुद. ११ सं० १९७८ वि०

वशंवद,<br>
**श्री भगवद्दासब्रह्मचारी.**<br>
वेदरत्न, निरुक्तभूषण (अयोध्या.)

# श्रीमते रामानन्दाय नमः

श्रीमन्महानुभाव।

निस्सीमकल्याणगुणैकनिलय भगवान् श्रीरामचन्द्रजीकी निर्व्याज–अनुकम्पासे यह सूचना देते परमानन्द होता है कि ' पुरातत्त्वानुसन्धायिनीसमिति अयोध्या ' ने अल्प समयमेंही श्रीरामानन्दसम्प्रदायका बहुत उपकार कर बताया है। यह समिति कुछ कालसे इस चिन्तामें लगी हुईथी कि कोई ऐसा प्रामाणिक ग्रन्थ उपलब्ध हो जिसमें श्रीरामानन्दसम्प्रदायके सिद्धान्तोंका अच्छा वर्णन हो। अनवरत परिश्रमके बाद अन्तमें अहमदावादमें पण्डित वृन्दावन शर्माजीके यहां नारदपञ्चरात्रान्तर्गत श्रीमद्वाल्मीकिसंहिताकी एक प्रति उपलब्ध हो ही गई। साथ ही दूसरी प्रति पूनेके पणशीकर के. वी. शर्माजीसे भी उपलब्ध हुई। समितिने इस पुस्तकके प्रकाशनका भार तथा सब प्रकारका अधिकार मुझे सौंप दिया। मैंने यह वचार करकि इस परम दुर्लभ ग्रन्थके मुद्रणसे सम्प्रदायकी कुछ सेवा होगी समितिके आदेशको शिरोधार्य्यकर मुद्रणकार्य्यारम्भ किया। इसके मुद्रण-कार्य्यरूप–अम्भोनिधिमें निमग्न मुझे देखकर मेरे माननीय सन्मित्र पुण्यश्लोक, कविवर, निरुक्तभूषण, वेदरत्न पण्डित श्री भगवद्दास ब्रह्मचारीजी महाराजने कर्णधारका कार्य्य किया है अतः उनका पूर्ण उपकार मानता हुआ मैं आशा करता हूं कि धर्म्मप्राण सज्जन इस ग्रन्थ रत्नको अपनाकर पूर्ण लाभ उठावेंगे।

शान्ति कुटीर
उञ्झा–( गुजरात )

विनीत
श्रीरघुवरदासवेदान्ती.

## दो शब्द

मैं प्रायः ६ माससे अहमदावादमें श्रीराजाधिराजमन्दिरमें निवास कर रहा हूं । इस मन्दिरके अधिपति महान्त पण्डित श्री वंशीदासजी शास्त्रीजी महाराज हैं । आप अत्यन्त सरल–प्रकृति, विचारशील और संस्कृत भाषा तथा साम्प्रदायिक-रहस्यके अच्छे ज्ञाता हैं । आपकेही सुखप्रद सुप्रबन्धमें रहकर मैंने 'यतीन्द्रविंशति' (श्री रामानन्द स्तोत्र) 'आश्रम कण्ट-कोद्धार' (विरक्त वैष्णवाश्रम विचार) और इस 'श्रीमद्वाल्मीकिसंहिताको मुद्रित कराकर आप श्रीवैष्णवोंकी सेवामें उपस्थित करनेका सौभाग्य प्राप्त किया है । अतः मैं श्रीपण्डितजी महाराजका हृदयसे कृतज्ञ हूं ।

राजाधिराज मन्दिर,
अहमदावाद.

भगवद्दास ब्रह्मचारी.

## इस संहिताके मिलनेका पता—

सेठ छोटेलाल लक्ष्मीचंन्द.
बुकसेलर, अयोध्या

महान्त श्री प्रेमदासजी
मोटामन्दिर, पालनपुर
(गुजरात)

# शुद्धाशुद्धनिदर्शनम्



प्रथमाध्याये २५ तमे श्लोके 'श्रृङ्गारं-शृङ्गारं'। २७ तमे श्लोके 'क्वचिद्दृष्टं–क्वचिद्दृष्टं'। ५१ तमे श्लोके 'स्वमण्डलं-खमण्डलम्'। द्वितीयाध्याये ३३ तमे श्लोके 'श्री सातां–श्रीसीतां'। तृतीयाध्याये ३६ तमे श्लोके 'मृगानेवं....स एव निर्द....–मृगानेवं.... स दृष्ट्वा निर्द....'। ३७ तमे श्लोके 'भूपति दृष्ट्वा–भूपति र्दृष्ट्वा'। ४२ तमे श्लोके 'सुखसुप्ताश्च–सुखसुप्ताँश्च'। ५५ तमे 'वचस्विदम्–वचस्त्विदम्'। ६६ तमेश्लोके 'रामन्त्रस्न्तु–राममन्त्रन्तु'। ७८ तमे श्लोके 'पतितं मामरक्षयत्–मग्नं त्वं मामरक्षयः'। ८८ तमे श्लोके 'शुद्धामदायाऽति–शुद्धामादायाऽति'। ९५ तमे श्लोके 'रांवाजं–रांवीजं' चतुर्थाध्याये ३१ तमे श्लोके 'सुबुद्ध यः–सुबुद्धयः'। पञ्चमाध्याये मैथिल्युपनिषदः प्रथमश्लोके 'निरज्जनां–निरञ्जनां'। षष्ठाध्याये २४ तमे श्लोके 'नैष्ठिकश्व–नैष्ठिकश्च'। ४५ तमे श्लोके 'गुरु मित्रं--गुरुर्मित्रं'। ५४ तमे श्लोके 'परमा--परमां'। ८२ तमे श्लोके 'मौद्गनि- मौद्गानि'। ९१ तमे श्लोके 'मौदम्बरं--मौदुम्बरं'। १३३ तमे श्लोके 'श्व--श्च'। चतुर्थपञ्चम षष्ठसप्तमाष्टमपत्रेपु बहिस्सीमं प्र० अ० इत्यस्य स्थाने द्वि० अ० इति, नवमदशमैकादशद्वादशपत्रेपु च बहिस्सीमं प्र० अ० इत्यस्य स्थाने तृ० अ० इति ज्ञेयम्।

# श्रीमद्वाल्मीकिसंहितायाः प्रत्यध्यायं श्लोकसंख्याक्रमेण विषयाः प्रदर्श्यन्ते ।

श्रीमत रामचन्द्राय नमः ।

# अथ वाल्मीकिसंहिता..

सर्वेषां मूलभूताय रघुनाथाय वेधसे। धनुर्द्धराय रामाय जानकीजानये नमः ॥ १ ॥ आसी-त्स्वस्थः समासीनो वाल्मीकि र्मुनिपुङ्गवः। ऋषयो मुनयश्चैव तमुपेत्य तपोधनम् ॥ २ ॥ उपविश्य च ते सर्वे विहितानतयः खलु। साञ्जलि प्रार्थयामासुः शुश्रूषाऽस्माकमस्तियत ॥ ३ ॥ के वेदा विषयाश्चापि के तेषां च तपोधन ! कथमुत्पत्तय स्तेषा मिति विज्ञापय प्रभो ! ॥ ४ ॥

वाल्मीकि रुवाच—

एकदा श्रुतयः सर्वाः समवेताः परस्परम्। चिन्तयामासु रेकान्ते का नो माता पिता च कः ॥ ५ ॥ संसारेऽस्मिन्महासारे प्रतिष्ठा परमास्तिनः। श्रद्दधते च सर्वे नो मानिभिश्च मता वयम् ॥ ६ ॥

परमेतन्न जानीमः का नो माता पिता च कः । कथं कस्मात्कदा जाता वयमस्मिन्महीतले ॥ ७ ॥
यदि न स्यात्कुलं श्रेष्ठं शुद्धश्चेन्नास्मदन्वयः। सन्देहः कोऽपि नास्तीह न स्यात्पूजा कदापि नः ॥ ८ ॥
तथाप्येतत्तु विज्ञेयं कस्माज्जाता जनिस्तु नः। जननीजनकौ क स्तो जन्मभूमिश्च कुत्र नः ॥ ९ ॥
ते धन्याः सर्वमान्यास्ते प्राप्तजन्मफलाहि ते। जीवतः पितरौ येषां सेवन्ते तौ च ये सदा ॥ १० ॥
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। श्रूयते सततं ह्येतन्मानवेषु सुरेषु च ॥ ११ ॥
बहवः क्षत्रिया वीरा जन्मभूमेश्च कारणात्। सङ्गरं समनुप्राप्य प्राणान् हित्वा महीतलात् ॥ १२ ॥
स्वर्गं च प्रापुरत्यर्थं देवैः सम्मानिताश्चते । इन्द्रोऽपि स्वासनं त्यक्त्वा स्वागतं चावदत्पुरा ॥ १३ ॥
पितरौ सेवमानाः प्यनेके स्वः प्रययुः पुरा। अस्माकं विदितं चास्ते सर्वं त्वेतद्विशेषतः ॥ १४ ॥
एवं विज्ञाय यत्नेन मातरं पितरं च नः। सेवनीयावुभौ प्रीत्या ह्येष धर्मः सनातनः ॥ १५ ॥
आत्मनोस्तु सुखं त्यक्त्वा यौ नो दत्तः सुखं परम्। सेवनीया वुभौ प्रीत्या ह्येष धर्मः सनातनः॥ १६ ॥
गर्भस्थं जीवलोकं यौ पालयतो दयायुतौ। सस्नेहं सेवनीयौ ता वेष धर्मः सनातनः ॥ १७ ॥
खादन्तौ च पिबन्तौ च यौ नो विस्मरतश्च नो। सस्नेहं सेवनीयौ ता वेष धर्मः सनातनः ॥ १८ ॥

शयानावपि यौ नित्यं ध्यायतो नः सदा शिवम्। सादरं सेवनीयौ ता वेष धर्मः सनातनः ॥ १९ ॥
सन्तती भोजयित्वैव भुञ्जाते यौ तु नित्यशः । सेवनीयावुभौ प्रीत्या ह्येष धर्मः सनातनः ॥ २० ॥
स्वयं दुःखं विषह्यापि यतेते च सुखाय नः । सादरं सेवनीयौ ता वेष धर्मः सनातनः ॥ २१ ॥
पितरौ सेवमानाना मन्यांश्चापि गुरूं स्तथा । आयुष्यं वर्द्धते नित्यं श्रूयते ज्ञानिनां मुखात् ॥ २२ ॥
सर्वज्ञानवतां श्रेष्ठो वेदविद्याविशारदः । ब्रह्मेति लोके विख्यात स्ततः प्रष्टव्य एव सः ॥ २३ ॥
इति सञ्चिन्त्य ताः सर्वाः श्रुतयो लोकमातरः । नारीरूपाणि सङ्गृह्य वस्त्राण्याभरणानि च ॥ २४ ॥
शृङ्गारं च समाधाय जगच्छान्तिप्रदायिकाः । अनन्ता रूपसम्पन्नाः प्रययु र्ब्रह्मसन्निधिम् ॥ २५ ॥
लक्ष्मीमपि तिरस्कर्तुं न्यक्कर्तुं रतिगर्वकम्। कोऽयं रूपसमारम्भ श्चिन्ता जाता च तद्धृदि ॥ २६ ॥
नैवं रूपं क्वचिद्दृष्टं न श्रुतं नापि चिन्तितम्। कस्येयं नूतना सृष्टिः कथं जाताऽत्र भूतले ॥ २७ ॥
एवं चिन्तयतस्तस्य ब्रह्मदेवस्य सन्निधौ । श्रुतयः सहसा तत्र प्रापु र्विश्वहिते रताः ॥ २८ ॥
प्रत्युत्थानादिना ब्रह्मा सच्चकार ससम्भ्रमम् । प्रददा वासनं तासा मलश्चक्रुश्च तत्समाः ॥ २९ ॥

यस्मिंश्च समये ताभिः समाक्रान्तं तु तत्पदम्। परमा तोषकरी शान्ति राविर्भूता ऋषीश्वराः! ॥३०॥
वयसः सम्पद् स्तासां रूपं लावण्यमद्भुतम्। विषयस्य प्रकोपाय नाभूत्किञ्चिदपि प्रभोः ॥ ३१ ॥
सर्वेषां च मनः शान्त मासी च्छान्तानि खानि च। आस्तिक्यं ज्ञानवीकाशः सम्यगासीद्विधेस्तदा
॥ ३२ ॥ अञ्जलिं मस्तके कृत्वा महातेजा विवेकवान्। ब्रह्मा सुरवर स्तत्र ह्येवं पप्रच्छ विह्वलः ॥३३॥

ब्रह्मोवाच—

का यूयं दिव्यरूपाढ्या वासः क्वास्ति कुलंच किम्? कस्यानन्दविधायिन्यः किमर्थं चागता
इह ॥३४॥ इति श्रुत्वा विधेर्वाचं जगन्मङ्गलकारणम्। तासामेका बृहत्तेजा जगाद वचनन्त्विदम् ॥३५॥

श्रुति रुवाचः—

कामरूपधरा नित्या हे ब्रह्मन्! श्रुतयो वयम्। यज्ञोपवीतिनां गेहे प्रायोवासं च
विद्धि नः ॥ ३६ ॥ कामक्रोधादिशत्रूणां जेतारो ये महीतले। तेषामेव मनोऽस्माकं वासस्थानं
निबोधय ॥ ३७ ॥ ये न सन्तीन्द्रियारामाः कामिनो नैव लोलुपाः। तेषामेव मनोऽ-
स्माकं वासस्थानं निबोधय ॥ ३८ ॥ येषां शुद्धं मनः क्वापि परदारान् न पश्यति।

तेषामेव मनोऽस्माकं वासस्थानं निबोधय ॥ ३९ ॥ सर्वेषां देवपूज्यानां भवानेवास्ति वृद्धराट् ।
सर्वशास्त्रार्थसम्पन्ना सर्ववस्तुविवेकिनी ॥ सर्वतो गामिनी भद्रा बुद्धिस्ते दूरदर्शिनी ॥ ४० ॥
इति विज्ञाय हे ब्रह्मन् समायाता वयं त्विह । कास्माकं जननी देव कः पितेति विबोधय ॥ ४१ ॥
न ज्ञानमास्ति नः किञ्चिद्विषयेऽस्मिन्महायशः! तस्मा त्त्वदुत्तरे ब्रह्मन्नस्माकं धीर्न गच्छति ॥ ४२ ॥
तासां रूपस्य वैपुल्यान्माधुर्य्याच्चाप्यलौकिकात् । आसीद्विमोहितो ब्रह्मा क्षणं स्वच्छाच्छमानसः
॥ ४३ ॥ तन्नामश्रुतिमात्रेण मोहो दूरं गतस्तथा । निर्धूताऽज्ञानवृत्तेस्तु सर्वं ज्ञानं बभूव ह
॥ ४४ ॥ प्रसन्नवदनो ब्रह्मा प्रोचे ता वचनंत्विदम् ।

ब्रह्मोवाच—

श्रृणुत प्राहितध्याना देव्यो यूयं वचोमम ॥ ४५ ॥ जगतः पितरौ रामो जानकी वेदविश्रुतौ ।
सर्वेशौ सर्वगौ सम्यक्सर्वज्ञौ सर्वदौ शिवौ ॥ ४६ ॥ नाशकौ सर्वदुष्टानां प्रणतानां च रक्षकौ ।
त्रातारौ दीनदासानां सृष्टिसंहारकारिणौ ॥ ४७ ॥ तामेव जानकीं वित्त जननी मात्मनः

१ क. 'त्मनां प'।

पराम् । श्रीरामं पितरं वित्त सत्यं ह्येतद्वचो मम ॥ ४८ ॥ दृष्टिनिक्षेपमात्रेण यो लोकान्त्सृजति प्रभुः । शक्त्या च परया युक्तः स युष्माकं जनिप्रदः ॥ ४९ ॥ गङ्गाद्याः सरितः सर्वा महापाश्चापि सागराः । सूर्य्याचन्द्रमसौ तारा अरण्यान्यश्च पर्वताः ॥ ५० ॥ सप्तद्वीपा महीयं च विस्तृतं च खमण्डलम् । पशवः पक्षिणो नाना कृतयो यस्य सन्तिहि ॥ ५१ ॥ अयं सूर्य्यस्तमोहन्ता यस्य भासा विभाति खे । स एव जानकीजानि र्जन्मदाताऽस्तिवः....॥ ५२ ॥ हिमाद्रिर्मेरुकैलाशौ द्योतयन्ति च यत्कृतिम् । सीतापतिं तमेवाऽत्र प्रभवं जानीत चात्मनाम्[1] ॥ ५३ ॥ इन्द्रादयः सुराः सर्वे सेवन्ते यं सदाऽनघम् । तमेव रघुवंशाग्र्यं पितरं वित्त चात्मनाम् ॥ ५४ ॥ सेवते यत्पदं नित्यं काशीवासी शिवोऽपि सः । साकेतस्थं परं ब्रह्म पितरं वित्त नान्यथा ॥ ५५ ॥ देवदेवोऽपि दासत्वं नित्यं यस्याभिकाङ्क्षति । रक्षकं जनकं चापि वित्त यूयं तमेव ह ॥ ५६ ॥ शचीप्रभृतयः सुर्य्यः सेवन्ते सततं च यम् । आत्मनां[2] जनकं चापि वित्त यूयं तमेव ह ॥ ५७ ॥ नित्या यूयं सुतास्तस्य श्रीरामस्य मम प्रभोः। सीतायाश्च महाराज्ञा विचारयत मान्यथा ॥ ५८ ॥

१ क. ' त्मनः ' । २ ख. ' त्मनः '

सामान्यज्ञानवत्सर्वं पुराऽऽसीन्मानवं जगत्। धर्म्माधर्म्मविवेकोऽपि नासीत्सम्यङ् महीतले ॥ ५९ ॥
किं कर्तव्यमकर्तव्यं मुग्धा आसन्नराः सदा। सृष्टे रादौ विवेकाय कल्याणाय नृणां तदा ॥ ६० ॥
परात्परेण रामेण सीतया सहितेन च। यूयमुत्पादिता देव्योऽनन्ता नित्यविभूतयः ॥ ६१ ॥
यावत्सृष्टि स्थितिर्वोऽत्र भविष्यति न संशयः। धर्मस्त्रोतांसि यूयं हि प्रथिताः सर्वदा भुवि ॥ ६२ ॥
एवं ब्रह्मवचः श्रुत्वा शान्तात्मानःस्तु ताः समाः। प्रसन्नाः श्रुतयो देव्यस्तदा जग्मुर्यथाऽगतम् ॥६३॥
आगच्छन्त्य स्ततः सर्वा स्ताः पथ्येवं व्यचारयन्। सर्वज्ञानवतां श्रेष्ठो वेदविद्याविशारदः ॥ ६४ ॥
गुरु र्देवगुरुः ख्यातो महातेजा महातपाः। भक्तिमांश्च महाज्ञानी श्रूयते सर्वथा सदा ॥ ६५ ॥
...[१] ....तत्समीप मुपेत्य च। श्रीरामस्य परं तत्वं श्रोतव्यं तन्मुखेन हि ॥ ६६ ॥ एवं
सम्मत्य ताः सर्वा स्तत्समीपं ययुः किल। पूजिताः सुरपूज्येन तमूचु र्वचनं मुदा ॥ ६७ ॥
... ....ज्ञानवच्छ्रेष्ठ रामतत्त्वं निबोधय। गुरु स्तासां वचः श्रुत्वा तत्क्षणं तद्बोधयत् ॥ ६८ ॥

---

१ ख. ' था शीघ्रं '।

एवं ताः सकलाः पुनीतहृदयाः श्रुत्वा वचस्तन्मुदा। प्रत्यावृत्य यथासुखं भुवि पुन स्तस्थु र्जगन्मातरः। लोकानां दुरितक्षयाय सततं ह्यद्यापि तास्ताः कथाः। देवानामपि दुर्लभाश्च कथयन्त्यानन्ददा नित्यशः ॥ ६९ ॥

इति श्री पाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां वेदोत्पत्तिनिरूपणं नाम

प्रथमोऽध्यायः।

ऋषय उचुः—

उत्पत्तयः श्रुतीनां तु श्रुतमस्माभिरादरात्। कृतकृत्या स्तु तच्छ्रुत्वा तद्विषयान् विबोधय ॥ १ ॥

वाल्मीकि रुवाच—

त्रैगुण्यविषया वेदा इति शास्त्रविवेचना। तत्र भगवत्कैङ्कर्यं नवधा भक्तय स्तथा ॥ सेवापूजा विधानानि वर्णितानि समासतः ॥ २ ॥ राममन्त्रस्य माहात्म्यं सर्वकामप्रदस्य तु। वर्णितं

तेषामेव मनोऽस्माकं वासस्थानं निबोधय ॥ ३९ ॥ सर्वेषां देवपूज्यानां भवानेवास्ति वृद्धराट् । सर्वशास्त्रार्थसम्पन्ना सर्ववस्तुविवेकिनी ॥ सर्वतो गामिनी भद्रा बुद्धिस्ते दूरदर्शिनी ॥ ४० ॥ इति विज्ञाय हे ब्रह्मन् समायाता वयं त्विह । कास्माकं जननी देव कः पितेति विबोधय ॥ ४१ ॥ न ज्ञानमस्ति नः किञ्चिद्विषयेऽस्मिन्महायशः! तस्मा त्त्वदुत्तरे ब्रह्मन्नस्माकं धीर्न गच्छति ॥ ४२ ॥ तासां रूपस्य वैपुल्यान्माधुर्य्याच्चाप्यलौकिकात् । आसीद्विमोहितो ब्रह्मा क्षणं स्वच्छाच्छमानसः ॥ ४३ ॥ तन्नामश्रुतिमात्रेण मोहो दूरं गतस्तथा । निर्धूताऽज्ञानवृत्तेस्तु सर्वं ज्ञानं बभूव ह ॥ ४४ ॥ प्रसन्नवदनो ब्रह्मा प्रोचे ता वचनंत्विदम् ।

ब्रह्मोवाच–

श्रृणुत प्राहितध्याना देव्यो यूयं वचोमम ॥ ४५ ॥ जगतः पितरौ रामो जानकी वेदविश्रुतौ । सर्वेशौ सर्वगौ सम्यक्सर्वज्ञौ सर्वदौ शिवौ ॥ ४६ ॥ नाशकौ सर्वदुष्टानां प्रणतानां च रक्षकौ । त्रातारौ दीनदासानां सृष्टिसंहारकारिणौ ॥ ४७ ॥ तामेव जानकीं वित्त जननी मात्मनः[1]

१ क. 'त्मनां प '।

सविशेषेण यागाद्या अपि वर्णिताः ॥ ३ ॥ वर्णितानि रहस्यानि ज्ञातव्यानि विशेषतः । यच्छ्रुत्वा मूढबुद्धीनां मानसं निर्मलं भवेत् ॥ ४ ॥

ऋषयऊचुः—

नवधा भक्तयः प्रोक्ता यास्तत्र च महामनः ! ताः श्रोतुमभिवाञ्छामः कृपया ब्रूहि नः प्रभो ॥ ५ ॥

वाल्मीकिरुवाच—

शृणुध्वमृषयो यूयं वक्ष्येऽहं सकलाश्च ताः । नश्येद्यच्छ्रुतिमात्रेण पातित्यं ज्ञानिनामपि ॥ ६ ॥
नवधा भक्तयः प्रोक्ताः श्री रामस्य प्रसादिकाः । भक्तै स्ताः सर्वदा सेव्या जगज्जालमुमुक्षुभिः ॥ ७ ॥
श्रवणं रामचन्द्रस्य गुणानां श्रद्धया पुनः । गुणानां कीर्तनं चापि तन्नामस्मरणं तथा ॥ ८ ॥
पादसेवार्चनं नित्यं वन्दनं दास्यमेव च । सखित्वं, श्रद्धया भक्तया तस्मै[1] चात्मनिवेदनम् ॥ ९ ॥
एताः कुर्वन्सदा भक्तीर्नरः पापात्प्रमुच्यते । गत्वाऽन्ते च प्रभो लोंके लभते शाश्वतं सुखम् ॥ १० ॥

१ ख. ' स्मा आत्म ' ।

इदानीं कथ्यतेऽस्माभिर्युष्माकं पुरतोऽनघाः । महात्म्यं राममन्त्रस्य श्रूयता मृषयो मुदा ॥ ११ ॥
'रां रामाय नमः' राममन्त्रं यूय मवेत वै। यस्य श्रवणमात्रेण कोटिजन्मकृतान्यपि ॥
पापानि च विनश्यन्ति क्षणेनैव महर्षयः ॥१२॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि गुणान्विताः ।
श्रद्धया परया युक्तास्ते च तस्याधिकारिण: ॥ १३ ॥ राममन्त्रविहीनानां शुद्धकर्मवतामपि ।
विफला हि क्रियाः सर्वा इति वेदेषु कथ्यते ॥ १४ ॥ वृथा धर्मो वृथा कर्म वृथा जीवनमस्ति च ।
राममन्त्रविहीनस्य वेदविद्याविदोऽपि च ॥ १५ ॥ रकारादिमकारान्तं मन्त्रं नित्यं षडक्षरम् ॥
श्रीरामस्य जपन्नित्यं पारं तरति कल्मषात् ॥ १६ ॥ रामतारकमन्त्रोऽयं महापातकनाशनः ॥ १७ ॥
जन्ममृत्युजराव्याधिशोकमोहादिसञ्चयः । नश्यति क्षणमात्रेण श्रद्धया जपतः सकृत् ॥ १८ ॥
राममन्त्रं जपान्नित्यं विधिवत्पापभागपि । भूत्वा निष्कल्मषो याति देहान्ते परमं पदम् ॥ १९ ॥
रामो हि देवता चास्य जानकी चक्रऋषिर्मता । गायत्रीच्छन्द आस्थेयं वीजं रां इति कथ्यते ॥ २० ॥
चक्रं षट्कोणसंयुक्तं भूमौ विन्यस्य तत्र च। ऊर्ध्वे रां इति विन्यस्य वामभागे च तस्य वै ॥ २१ ॥

१ ख. 'सर्वश्रुतिश्रुतस्यच'।

राकारो लिख्यतेऽधस्तान्माकारो दक्षिणेपुनः। ततोऽधश्च यकारोऽपि नकारो वामपार्श्वके ॥ २२ ॥
मःकार श्चक्रमध्ये च, पूर्वस्यां दिशि संविशन्। ब्राह्म एव मुहूर्ते तु श्रद्धाभक्तिसमन्वितः ॥ २३ ॥
धूपगन्धेन सम्पूज्य दीपं प्रज्वाल्य सर्पिषः। साष्टाङ्गं प्रणिपत्यैव पुनस्तत्रोपविश्य च ॥ २४ ॥
उत्तराभिमुखो भूत्वा श्रीरामं हृदये स्मरन्। चक्रस्य वामभागे तु धनुरालिख्य तत्परम् ॥ २५ ॥
दक्षिणे वाणयुग्मस्य विन्यस्याकृति मुत्तमाम्। पुनस्तथैव धूपाद्यै रर्चां कृत्वा विधानतः ॥ २६ ॥
[1]लक्षत्रयं समाऽऽसीनो जपं स्तारक मुत्तमम्। लभते परमां मेधां वीतपापपरम्परः ॥ २७ ॥
यां मेधां विबुधा नित्यं पितरश्चाप्युपासते। तया युक्तः क्षणेनैव देवतुल्यो भवेन्नरः ॥ २८ ॥
मोक्षाभिलाषिणो मोक्षं कामं कामाभिलाषिणः। अर्थमर्थिन एवात्र प्राप्नुवन्ति न संशयः॥ २९ ॥

ऋषय ऊचुः—

पूर्वंतु राममन्त्रोऽय मासीत्स्वर्[2]ग्येषु केवलम्। पृथिव्यां कथमायात स्तन्नो ब्रूहि दयानिधे॥ ३० ॥

---

१ क. 'एकासनो लक्षत्रयं'। २ क. 'स्वर्गे हि के'।

वाल्मीकि रुवाच–

इदं तु परमं तत्त्वं देवाना मप्यगोचरम्। पृष्टं युष्माभि रनघं कथ्यते श्रृणुतर्षयः ॥ ३१ ॥
भगवान् रामचन्द्रो वै परं ब्रह्म श्रुतिश्रुतः । दयालुः शरणं नित्यं दासानां दीनचेतसाम् ॥ ३२ ॥
इमां सृष्टिं समुत्पाद्य जीवानां हितकाम्यया। आद्यां शक्तिं महादेवीं श्रीसीतां जनकात्मजाम् ॥३३॥
तारकं मन्त्रराजं तु श्रावयामास ईश्वरः । जानकी तु जगन्माता हनूमन्तं गुणाकरम् ॥ ३४ ॥
श्रावयामास नूनं स ब्रह्माणं सुधियां वरम् । तस्माल्लेभे वसिष्ठर्षिः क्रमादस्मादवातरत् ॥
भूमौ हि राममन्त्रोऽयं योगिनां सुखदः शिवः ॥ ३५ ॥ एवं क्रमं समादाय मन्त्रराजपरम्परा ।
भूमौ प्रचलिता नित्या सर्वलोकसुखप्रदा ॥ ३६ ॥

ऋषय ऊचुः–

संशयो नः समुत्पन्नः परमः परतत्त्ववित्! त्वद्वचांसि निशम्यैव समाधेहि सपद्यलम् ॥ ३७ ॥

१ ख. 'शिष्ठ'।

जानक्याः शिष्यतां यातो हनूमान्नाम वानरः । इत्यवोचद्भवान् यत्तु तत्र नः कौतुकं परम् ॥३८॥
त्रेतायां स बभूवेति सर्वतः श्रूयते किल । सर्गादौ च कथं शिष्यो जानक्याः सम्बभूव सः ॥३९॥

वाल्मीकि रुवाच–

शृणुध्वमृषयो यूयमुचितः संशयोऽस्ति वः । परं किंन विजानीथ महाशम्भुः स पावनिः ॥ ४० ॥
नित्यसत्त्वविभूतिस्थो राघवस्य परं प्रियः । जानकीशोकसंहर्ता स्वामिभक्तः स्वभावतः ॥ ४१ ॥
तच्छ्रुत्वा छिन्नसन्देहाः सर्वे ते हृष्टचेतसः । साञ्जलि प्राहु रेतानि शृणुष्व वचनानि नः ॥ ४२ ॥

ऋषय ऊचुः–

विशिष्टाद्वैतसिद्धान्ते तत्त्वत्रय मितीरितम् । तच्छ्रोतुमभिवाञ्छामः कृपया ब्रूहि नः प्रभो ॥ ४३ ॥

वाल्मीकिरुवाच–

शृणुध्वं मुनयः सर्वे कथयामि समीहितम् ॥ ४४ ॥ मुमुक्षो श्चेतनस्यैव तस्य[1] ज्ञानमपेक्ष्यते ।

---

१ क, ' स्वज्ञा ' ।

चिदचिदीश्वर [1]श्चैतत्तत्त्वत्रय मितीरितम् ॥ ४५ ॥ परीक्ष्य लोकानित्यादिश्रुत्युक्तेन क्रमेण च ।
मुमुक्षा जायते पूर्वं तत्त्वज्ञानाच्च सर्वथा ॥ ४६ ॥ आत्मा चित्पदसङ्ग्राह्यो ज्ञानाश्रय इतीरणा ।
तस्य रूपमिदं ज्ञेयं वक्ष्यमाण मनुत्तमम् ॥ ४७ ॥ देहेन्द्रियमनःप्राणबुद्धिभ्यश्च विलक्षणम् ।
अजडं नित्य मव्यक्तं निर्विकारं निरिन्द्रियम् ॥४८॥ नियाम्यं धार्य्यमीशस्य शेषं तस्य च शेषिणः।
अणु चानन्दरूपं च ज्ञेयं रूपं चिदात्मनः ॥ ४९ ॥ दाहे तु पातकाभावान्न देह आत्मसंज्ञकः ।
इन्द्रियाणामचैतन्यान्नतान्यपि स चेतनः ॥ ५० ॥ अनित्यत्वादनेकत्वात्तेषां नात्मत्वमीरितम् ।
यदि चक्षुर्भवेदात्मा नान्धो रूपं स्मरेत्क्वचित् ॥५१॥ श्रोत्रस्य यदि [2]चात्मत्वं स्वीकृतं स्यान्महर्षयः ।
शब्दस्मृतिः पुनश्चात्र बाध्या स्यात्सर्वथाऽनघाः॥५२॥ स्थूलोऽहमिति संवादो गुणीभूतोहि निश्चितः।
तस्माद्देहस्य चात्मत्वं न स्यात्सिद्धं कदापि तु ॥५३॥ अन्याधीन[3]प्रकाशस्तु न स्याद्य[4]श्च महर्षयः ।
अजडं तं विजानीथ ह्येषा शास्त्रीयकल्पना॥ ५४ ॥ बद्धा मुक्ताश्च नित्याश्च त्रिधाऽऽत्मानः समीरिताः



१ क. 'चिच्चाचिच्चेश्वर श्चैवं तत्त्व' । २ ख. 'वाऽऽत्मं । ३ क. 'नः प्र' । ४ ख. 'स्यम' ।

॥५५॥ ब्रह्मादिकीटपर्यन्ता देवदानवमानवाः । तिर्यञ्चः स्थावराश्चापि बद्धाः संसारिणो मताः ॥५६॥
ते चापि द्विविधा एके शास्त्राधीनत्व मागताः। परे चोच्छृङ्खला ज्ञेयाः शास्त्रधर्मपरिच्युताः॥ ५७ ॥
शास्त्राधीनाश्च विज्ञेया स्तत्त्वस्य प्रबुभुत्सवः । बुभुक्षुत्वमुमुक्षुत्वभेदेन द्विविधा हि ते ॥ ५८ ॥
बुभुक्षवो द्विधा प्रोक्ताः ... .... ...। अर्थकामपरा एके ततो धर्मपराः परे ॥ ५९ ॥
ये च धर्मपरा स्तेऽपि द्विविधाः सन्ति जन्मिनः। देवान्तरेषु संलग्नाः श्रीरामचरणेषु च ॥ ६० ॥
मुमुक्षवो द्विधा ज्ञेयाः कैवल्या मोक्षमार्गिणः । शृणुध्वमृषयो वेदे मोक्षकामा द्विधा मताः ॥ ६१ ॥
भक्ता श्चापि प्रपन्नाश्च, भक्ताश्चापि द्विधा मताः । साध्यसाधनभेदेन भक्तेर्द्वैविध्यकारणात् ॥ ६२ ॥
प्रपन्नोऽपि द्विधा ज्ञेयो मोक्षेच्छुश्च त्रिवर्गवान् । एकान्ती परमैकान्ती दृप्त आर्तश्च विश्रुताः ॥
भेदाश्च बहवः सन्ति बद्धानां तु महर्षयः। ॥६३॥ मुक्ता निवृत्तसंसारा उच्यन्ते वेदवेदिभिः ॥ ६४ ॥
सूर्यमण्डलमाभिद्य सूर्यलोक मवाप्य च । विरजां सम्प्रतीर्याऽथ वैकुण्ठं सम्प्रविश्य च ॥ ६५ ॥
तत्रत्यान् हनुमदादीन् साष्टाङ्गं प्रणिपत्य च । श्रद्धया परया युक्ता आचार्य्यानितराँ स्तथा ॥६६॥
भगवन्तं रामचन्द्रं धनुर्वाणविभूषितम् । श्रियः श्रिया च जानक्या कमलेच विराजितम् ॥ ६७ ॥

दिव्यासनसमासीनं दिव्यभूषणभूषितम् । ब्रुवाणा नाथ नाथेति प्रणम्य जगदीश्वरम् ॥ ६८ ॥
स्वाङ्के श्रीरामचन्द्रेण करुणावरुणालये । स्थापिताश्च महाभागा स्तेनैव च कटाक्षिताः ॥
ब्रह्मानुभवकर्त्तारो मुक्ता उच्यन्त आस्तिकैः ॥६९॥ संसार मनवाप्तास्तु नित्या हनुमदादयः॥ ७० ॥
ज्ञानेनैव विहीनं यद्द्रव्यचित्तत्त्वं निगद्यते । शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्येतिभेदतः ॥ त्रिविधं
प्रोक्तमित्यादि ज्ञेयं सर्वं मनीषिभिः ॥ ७१ ॥ ईश्वरः सर्वभूताना मादिकारण मुच्यते । सर्वज्ञो
ज्ञानशक्त्यादिकल्याणगुणभूषितः ॥ ७२ ॥ धर्म्मार्थकाममोक्षाणां प्रदाता रघुनन्दनः । दिव्य-
विग्रहसंयुक्तोऽनन्तानन्दो जगत्पतिः ॥ ७३ ॥ यद्यप्यार्तिहरो रामो ह्यन्तर्यामी महाप्रभुः । तथा
प्यात्मकृतैः कार्य्यैर्न कदापि स बध्यते ॥ ७४ ॥ यथा बाल्याद्यवस्थाभि र्न जीवो दूष्यते क्वचित् ।
तथाऽन्तश्चरमाणोऽपि न भवेद्दूषितो हरिः ॥७५॥ परव्यूहादिभेदेन विज्ञेयः सच पञ्चधा ॥ ७६ ॥
बहुभिर्द्वारपालैश्च कोट्टपालैश्च संयुतः । महामणिसमाकीर्णे मण्डपे च विराजितः ॥ ७७ ॥
शोभया परया युक्तः किरीटमुकुटादिभिः । महाराज्ञ्या च जानक्या भूनीलाभ्यां च सेवितः ॥
'परो' हि भगवान् रामः परे लोके विराजितः ॥ ७८ ॥ सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्ध इति भेदतः ।

जानक्याः शिष्यतां यातो हनूमान्नाम वानरः। इत्यवोचद्भवान् यत्तु तत्र नः कौतुकं परम् ॥३८॥
त्रेतायां स बभूवेति सर्वतः श्रूयते किल। सर्गादौ च कथं शिष्यो जानक्याः सम्बभूव सः ॥३९॥

वाल्मीकि रुवाच–

शृणुध्वमृषयो यूयमुचितः संशयोऽस्ति वः। परं किंन विजानीथ महाशम्भुः स पावनिः ॥ ४० ॥
नित्यसत्त्वविभूतिस्थो राघवस्य परं प्रियः। जानकीशोकसंहर्ता स्वामिभक्तः स्वभावतः ॥ ४१ ॥
तच्छ्रुत्वा छिन्नसन्देहाः सर्वे ते हृष्टचेतसः। साञ्जलि प्राहु रेतानि शृणुष्व वचनानि नः ॥ ४२ ॥

ऋषय ऊचुः–

विशिष्टाद्वैतसिद्धान्ते तत्त्वत्रय मितीरितम्। तच्छ्रोतुमभिवाञ्छामः कृपया ब्रूहि नः प्रभो ॥ ४३ ॥

वाल्मीकिरुवाच–

शृणुध्वं मुनयः सर्वे कथयामि समीहितम् ॥ ४४ ॥ मुमुक्षो श्चेतनस्यैव तस्यं[1] ज्ञानमपेक्ष्यते।

---

१ क, 'त्वज्ञा'।

विज्ञेयश्च त्रिधा 'व्यूहो' जगत्सृष्ट्यादिकारकः ॥७९॥ पूर्णो ज्ञानबलाभ्यां च 'सङ्कर्षण' इति स्मृतः।
वीर्य्यैश्वर्य्ययुत स्तत्र 'प्रद्युम्न' इति कथ्यते ॥ शक्तितेजोविशिष्टस्तु 'ह्यनुरुद्ध' इतीरितः ॥ ८० ॥
तत्तत्साजात्यरूपेण ह्याविर्भावः परस्य वै । 'विभवः' सच विज्ञेयो मुख्यो गौणश्च स द्विधा ॥
उपास्यः पुरुषै र्मुख्यो नच गौणः कदाचन ॥ ८१ ॥ सर्वत्र सर्वदा यस्तु जीवाँस्त्यक्तुं नच क्षमः ।
'अन्तर्यामी' स विज्ञयो जीवदोषै रदूषितः ॥ ८२ ॥ देशकालादिनियमै रहितः स महाप्रभुः ।
धातुपाषाणकाष्ठादिकृतविग्रहमाश्रितः ॥ ८३ ॥ श्रीरामः स परं ब्रह्म जानक्या सहितः प्रभुः ।
'अर्चावतारो' विज्ञेयः कृपाशीलो गुणाम्बुधिः ॥ ८४ ॥ एवं पञ्च प्रकारेण ह्येकोऽपि स महाप्रभुः ।
विभक्तो भगवान् रामः सर्वलोकैकरक्षकः ॥ ८५ ॥ सेवितः परया भक्त्या सन्तुष्टः स हरिः सदा ।
स्वाश्रितेभ्यश्च दासेभ्यः सायुज्यं सम्प्रयच्छति ॥ ८६ ॥

इति श्री पाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां विशिष्टाद्वैतसिद्धान्तनिरूपणं नाम

द्वितीयोऽध्यायः ।

ऋषय उचुः—

राममन्त्रस्य माहात्म्यं कथितं भवता पुरा । तथापि चाधिकं श्रोतु मीहा नस्तु प्रजायते ॥ १ ॥
भगवँस्तस्मात्कृपां कृत्वा दीनेष्वस्मासु सुव्रत । कथयस्व कथां काश्चिद्येनाऽस्माकं सुखं[1] भवेत् ॥ २ ॥
राम एवास्ति सर्वेषा मस्माकं जीवनं परम् । रामे च योगिनः सर्वे रमन्ते मोक्षकाङ्क्षया ॥ ३ ॥
त्रयाणामपि लोकानां पाता धाता च सर्वथा[2] । संहर्ता वापि श्रीराम उच्यते सकलैर्बुधैः ॥ ४ ॥
धर्म्मार्थकाममोक्षाणां प्रदाता रघुनायकः । श्रूयते सततं वेदे जानकीजानि रीश्वरः ॥ ५ ॥
सुराणां च परित्राता निहन्ता रक्षसां प्रभुः । सर्वशक्तिसमायुक्तो रघुनायक ईश्वरः ॥ ६ ॥
तस्मात्त्वं करुणासिन्धो ! राम भक्तिपरायण ! राममन्त्रस्य महात्म्यं याथार्थ्येन वदस्व नः ॥ ७ ॥

वाल्मीकि रुवाच—

ऋषयः ! श्रूयतामद्य सर्वपापविनाशनम् । राममन्त्रस्य माहात्म्यं देवानामप्यगोचरम् ॥ ८ ॥

१ ख. ‘ रति भे ’ । २ क. ‘ वेदा ’ ।

लक्षत्रयं समाधिस्थो राममन्त्रं जपन् सदा। अपुत्रो लभते पुत्रं सर्वशत्रुविकर्षणम् ॥ ९ ॥
मोक्षस्तु नियत स्तस्य वाक्सिद्धिश्च प्रजायते। तेजसा सञ्ज्वलन्नेव नित्यमित्थं प्रतीयते ॥ १० ॥
पुरा कश्चिन्महापुण्यो वत्सलो नाम भूपतिः। तेन मन्त्रस्य माहात्म्य मनुभूतं यथा, तथा ॥ ११ ॥
कथ्यते श्रूयतां सम्यक् सावधानेन चेतसा। तच्छ्रवणेन युष्माकं सुसिद्धं स्यान्मनीषितम् ॥ १२ ॥
एकदा वत्सलो राजा सर्वभूतहिते रतः। कार्तिके मासि सश्चिन्वन्नेकादश्यां व्रतं ध्रुवम् ॥ १३ ॥
प्रथमे प्रहरे राजा दिनस्य, विदुषां गणैः। यज्ञभूमौ यजन्देवानासीत्तिष्ठन्महामनाः ॥ १४ ॥
तस्मिन् काले महाक्रोधो विप्रः कश्चित्समाययौ। घर्षन्दन्ताँश्चरक्ताक्षः कोपेन स्फुरिताधरः ॥ १५ ॥
यज्ञभूमिं स सम्प्राप द्वारपालैरवारितः। तत्र तं भूपतिं दृष्ट्वा क्रोशयामास स द्विजः ॥ १६ ॥
तव राज्ये महीपाल ! ब्रह्मज्ञा वेदपारगाः। कोटयो ब्राह्मणा नित्यं संवसन्ति यजन्ति च ॥ १७ ॥
वीक्षस्व, यजमानाना मस्माकं शान्तिशालिनाम्। केनापि रक्षसा नूनं यज्ञःसम्प्रत्युपद्रुतः॥ १८ ॥
निश्चिन्तेन त्वया राजन् साध्यते स्वार्थ एवहि। चल, रक्ष महायागानस्माकं राक्षसाच्छुभान्॥१९॥

अन्यथा ते कुलं सर्वं दहेयं शापवह्निना । सत्यं तेऽहं वदाम्येतत् कर्तव्यो नात्र संशयः ॥ २० ॥
श्रुत्वेदं विप्रवाक्यं स तस्मिन्नेव क्षणे नृपः । धनुर्वाणौ समादाय वनं प्रतिययौ मुदा ॥ २१ ॥
यत्रैव यजमानास्ते विप्रा आसन्नुपद्रुताः । तत्रैव स समागत्य राक्षसं च तथाविधम् ॥ २२ ॥
अवलोक्य महावीरः क्रोधसंव्याप्तमानसः । एकेनैव च वाणेन निजघान स राक्षसम् ॥ २३ ॥
प्रसन्नै र्ब्राह्मणैः सर्वै राज्ञसो नृपसत्तमः । राजधानीं समागच्छन् हृदये स व्यचीचरत् ॥ २४ ॥
इतः समीपे देशे हि कन्दलं नाम जङ्गलम् । विद्यते, यत्र विद्यन्ते बहवः सुन्दरा मृगाः ॥ २५ ॥
हत्वा कतिपयाँ स्ताँस्तु समादाय ततःशनैः । राजधानीं च गच्छामि सर्वसौख्यसमाकुलम् ॥ २६ ॥
एतद्विचार्य्य राजा[1] स प्रययौ कन्दलं ततः । निर्भयं यत्र बहवो विचरन्तिस्म ते मृगाः ॥ २७ ॥
प्राप तत्राऽचिरेणैव भूमिपालो महाबलः । पश्यँश्च जाङ्गलीं शोभां मृगव्यूहं व्यलोकयत् ॥ २८ ॥
क्रीडन्तः केचनाऽऽसँस्तु खादन्तः केचनासत । निर्मलापे तटाकेऽपः पिबन्तः केचनासत ॥ २९ ॥



१ क- ‘ धक्ष्येऽहंते कुलं सर्व मन्यथा शापवह्निना ’ ।

मृगवालान्समादाय धापयन्त्यो मृगस्त्रियः। उपविष्टाश्च तत्राऽऽसन् पादपाना मधस्तले ॥ ३० ॥
केचिद्बालमृगास्तत्र वृक्षमूले समन्ततः। क्रीडान्तिस्म सुखेनैव कुर्वन्तः शृङ्गघर्षणम् ॥ ३१ ॥
केच्चिच्चापि मिथस्तत्र प्रेम्णा बालस्वभावतः। युध्यन्तेस्म चिरेणव शृङ्गाश्रृङ्गि सुखाकरम् ॥ ३२ ॥
धनुष्पाणिं विलोकय्यापि ह्यायान्त मवनीपतिम्। अव्याकुलाः स्थिता आसँस्तत्र[1]सुर्मनसाऽपिन॥३३॥
पूर्वजन्मकृतेनैव केनचित्पापकर्मणा। विकृतातस्य वै बुद्धि र्धार्म्मिकस्यापि भूपतेः ॥ ३४ ॥
दंशानपि वरायितुं यो न धर्मभिया मतिम्। कदाचिदपि सुप्तोऽपि कृतवान् दीनरक्षकः ॥ ३५ ॥
मृगानेवं निषण्णान् स एव निर्दयतां गतः। धनुषि स्थापयामास तत्राऽऽशु विशिखान्नृपः ॥ ३६ ॥
मृगमेकं निहत्यैव व्रजतः पथि तस्य वै। गज एको महारत्ने वेंष्टितो दृष्टि माययौ ॥ ३७ ॥
तमेवं भूपति दृष्ट्वा स्वायत्तीकृत्य विद्यया। आरुरोह च तत्पृष्ठे मृगं चाऽस्थापयत्ततः ॥ ३८ ॥
सुखोपविष्ट मात्मानं जानातिस्म यदा नृपः। महत्कौतूहलं जातं तदा तच्च निशम्यताम् ॥ ३९ ॥

१ ख. ' मनसाऽपिन तत्रसुः।

त्रितालदघ्न एवाऽभूत्सहसा स गजस्तदा। राजा तत्पृष्ठ मारूढो विभीतिं जग्मिवान् पराम् ॥ ४० ॥
स करीन्द्र स्तदा भूप मुक्तवानेवमुच्चकैः । राजंस्त्वमतिमूर्खोऽसि निष्करुणोऽसि पापकृत् ॥ ४१ ॥
सुखसुप्ताश्च विश्वस्तान् वञ्चयित्वा मृगानिमान् । एकं तेषु च संवध्य कुकृत्यं कृतवान्नृप ॥ ४२ ॥
यद्दुष्कर्म कृतं राजँस्त्वया धर्मविघातिना । तत्फलं भुज्यतां सद्यः पतन् प्राणानितो जहि ॥ ४३ ॥
राज्यं च तव नष्टं स्यादपुत्रस्य कुकर्मणः । कृमियोनिं समापद्य त्वं खिद्यस्व शतं समाः ॥ ४४ ॥
राजा तद्वचनं श्रुत्वा ह्येवमन्तर्भिदाकरम् । पश्चात्तताप मूढात्मा दुःखसंविग्नमानसः ॥ ४५ ॥
अश्रूणि पातयन् राजा विलपञ्छोकविह्वलः । अञ्जलिं शिरसि न्यस्य प्रोचे विगतचेतनः ॥ ४६ ॥
अकर्तव्यं कृतं कर्म मयाऽवश्यं तु पापिना । तेन मह्यं महाभाग क्रुध्यसे त्वं भृशं गज! ॥ ४७ ॥
किन्तु कस्त्वमिति ज्ञातुं समीहा जायते मम। विज्ञापयस्व तन्मह्यं नूनं त्वं धर्मकोविद !॥ ४८ ॥
हे देव ! हे विपिन नायक ! नागराज ! हे सत्त्वनाथ ! गजराज ! विशालकाय!। तुभ्यं नमोऽस्तु भगवन्नतिदिव्यरूप ! देवोऽसिवा सुरगजोऽस्यथ योऽसि सोऽसि ॥ ४९ ॥ सत्यं कृतं पतितपावन ! पापमद्य दुर्बुद्धिना तु मयका विदुषां वरिष्ठ ! हा हा भवेत्कथमये मम नाथ ! शुद्धिर्हे दीर्घशुण्ड !

गजराज ! वनाधिराज ! ॥ ५० ॥ आजन्मनो नहि मयाऽऽचरितं गजेन्द्र ! पापं कदापि सुरसेवन-तत्परेण । तस्मात्क्षमस्व गजनायक पापमेकमज्ञानगर्तपतितस्य दुरात्मनो मे ॥ ५१ ॥ मातः ! पित स्तव सुतोऽद्य विपद्यतेऽद्य निस्सन्ततिस्तु भविता तव वंश एषः । युष्मभ्य मद्य वद को जगतीतलेऽस्मिन्निर्वापं......दास्यति योग्यकाले ॥ ५२ ॥ हाराम ! हा जननि जानकि रक्ष शीघ्रं त्रायध्व मद्य नितरां कुलदेवता ! मे । मत्पापकर्मफलतोऽपरवंश्यकीर्तिं......प्रलयं व्रजन्तीम् ॥ ५३ ॥ निपपात पृथिव्यां स विलपन्नित्थ माकुलः । निश्चेतनोऽपि सञ्जातः क्षणं तु तदनन्तरम् ॥ ५४ ॥ लघुरूपधरो हस्ती ह्युपतस्थौ समीपतः । शुण्डेनोत्थाप्य तं भूपं व्याजहार वचस्विदम् ॥ ५५ ॥ राजन्नुतिष्ठ बुध्यस्व[१] शृणु, चेदं वचो मम । यत्त्वया ज्ञानहीनेन पूर्वकर्मविपाकतः ॥ पाप-माचरितं तस्मात्तव क्षेमो विनङ्क्ष्यति ॥ ५६ ॥ शापो यस्तु मयादत्तो न स मिथ्या भविष्यति । किन्त्वेकेन प्रयत्नेन क्षीणशक्ति र्भविष्यति ॥५७॥ यदि स्यात्प्राणहानिस्ते विकलाःस्युः प्रजास्तव ।

१ ख.: पुस्तके: नास्त्येष श्लोकः ।

नैकोऽप्यस्तीदृशो यस्तु रक्षेत्सर्वाः प्रजाः किल ॥५८॥ सर्वा एव प्रजा अद्य त्वां विना पृथिवीपते ! उच्छृङ्खलत्वमेत्याऽत्र प्राप्नुयु र्धर्महीनताम् ॥५९॥ कुलस्त्रियो विनष्टाःस्युः कौलधर्मात्परिच्युताः। संङ्कराणांच संवृद्धि र्भवेन्नूनं ततः परम् ॥ ६० ॥ तस्मान्नाशयितुं शापं मया दत्तं महीपते ! उपायः सरलोऽस्माभिः कथ्यते स निशम्यताम् ॥ ६१ ॥ राममन्त्रस्य माहात्म्यं सर्वपापहरस्य च। गीयते सर्वशास्त्रेषु वेदेषु च तथैव च ॥ ६२ ॥ मोक्षार्थी मोक्ष मागच्छेत्पुत्रार्थी पुत्रमाप्नुयात्। विद्यार्थी प्राप्नुयाद्विद्यां धनार्थी प्राप्नुयाद्धनम् ॥ ६३ ॥ धर्मार्थकाममोक्षाणां नास्ति कोऽपि च तादृशः। यं च नाराधितो दद्याद्राममन्त्रः प्रतापवान् ॥६४॥ ब्रह्महत्या सुरापानं कनकाहरणं तथा। सङ्गमो गुरुपत्न्या च महापातक मुच्यते ॥ ६५ ॥ महापातकनाशोऽपि मानवानां क्षणेनच। जपतो राममन्त्रस्न्तु भवतीह न संशयः ॥ ६६ ॥ अज्ञानेन कृतं कर्म नश्यत्यल्पप्रयत्नतः। कृतवानसि पापं त्वमज्ञानेनैव भूपते ! ॥ ६७ ॥ अज्ञानेन कृतं कर्म नच पापाय कल्पते। यत्त्वं तथापि शप्तोऽसि क्रोधयुक्तेन वै मया। श्रूयतां पृथिवीपाल तस्य हेतुं ब्रवीमिते ॥ ६८ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्र एव तथैव च। वर्णा एते हि चत्वारः कथिताः शास्त्रपारगैः ॥ ६९ ॥ सर्वेष्वेव च वर्णेषु

ब्राह्मणः श्रेष्ठतां गतः। सर्वे तेन नियम्याः स्यु रन्ये वर्णास्त्रयः खलु ॥ ७० ॥ रक्षको भक्षक श्चेत्स्यात्कथं धर्मस्थिति र्भवेत्। तस्माद्ल्पेऽपराधेऽपि दण्डनीयो महान् सदा ॥ येन न स्यात्पुनस्तेन पापकर्म कृतं क्वचित् ॥ ७१ ॥ क्षत्रियः सर्ववर्णानां धर्मतो रक्षकः स्मृतः। यः क्षतात्त्रायते सर्वान् क्षत्रियः स हि कथ्यते ॥७२॥ स्वाधिकारात्प्रमत्तश्चेद्भवेद्राजन्यकः क्वचित्। देवेन ब्राह्मणेनाऽपि दण्डनीयः स तत्क्षणम् ॥ ७३ ॥ अपराधविहीनोयं मृगो राजँस्त्वया हतः। ततः शप्तोऽसि भूपाल ! धर्मं पालयता मया ॥७४॥ विधिना चेत्त्वयाऽऽमासं राममन्त्रस्य नित्यशः। जपः स्याच्चेत्कृतो भूप वारं दशसहस्त्रकम् ॥ ७५ ॥ शापात्प्रमुच्य भूपाल शुद्धां बुद्धिं समेत्य च। धर्मेण स्वप्रजा रक्षञ्जीवसे शरदः शतम् ॥ ७६ ॥ एवं श्रुत्वा स धर्मात्मा भूपतिर्निश्चलव्रतः। प्रार्थयामास साष्टाङ्गं प्रणिपत्य महीतले ॥ ७७ ॥

राजोवाच—

महती ते दया देव यत्त्वया पापनाशनम्। प्रतिज्ञाय महादुःखे पतितं मामरक्षयत् ॥ ७८ ॥

नमस्ते देवराजाय नमस्ते शोकहारिणे ! नमस्ते धर्मरूपाय नमस्ते गजरूपिणे ॥ ७९ ॥
नमस्ते सर्वगायास्तु नमस्ते बुद्धिशालिने । नमस्ते विश्वरूपाय नमस्ते शक्तिशालिने ॥ ८० ॥
भगवञ् श्रूयतामेषा प्रार्थना कृपयात्वया । समीहा जायते श्रोतुं साकल्येनैव तं विधिम् ॥ ८१ ॥
येनैव विधिना मन्त्र ञ्जपञ्छापात्तव प्रभो । मुक्तः स्यां, कथ्यतां सर्वः सप्रपञ्चो विधिः स च॥८२॥

गज उवाच—

राजञ्छुद्धमना भूत्वा श्रूयतां वचनं मम । यस्मात्ते शापमोक्षः स्यात्तं विधिं ते दिशाम्यहम् ॥८३॥
गङ्गातीरं समासाद्य तत्रैवाहश्चतुष्टयम् । निर्जलेन निरन्नेन संस्थातव्यं त्वया नृप ॥ ८४ ॥
दर्शनं स्पर्शनं सर्व मन्येषां परिवर्ज्य च । केवलं रामरामेति मनसा सञ्जपन् नृप ॥ ८५ ॥
चतुरो दिवसानेतान्नय त्वं वाचि संयतः । प्रसन्नवदनो भूत्वा मूकवच्च समाचरन् ॥ ८६ ॥
पञ्चमे दिवसे प्राप्ते मुहूर्ते ब्रह्मणः शुभे । स्नात्वा भूप शुचि र्भूत्वा परिधाय सुवाससी ॥ ८७ ॥
गङ्गाया मृत्तिकां शुद्धा मदायाऽतिसुखावहाम् । एकां च वेदिकां कुर्य्या हस्त्वां कोणत्रयीयुताम्॥८८॥
प्रत्येकं तु भुजस्तस्या हस्तत्रयप्रमाणवान् । सरलो प्रक्षणः कार्य्यो दर्शनीयो विशेषतः ॥ ८९ ॥

पूर्वाभिमुखं आस्थाय तस्या मध्ये प्रयत्नतः । कुण्डमेकं निखातव्यं वितस्तिपरिमाणवत् ॥ ९० ॥
कुण्डस्य दक्षिणे भागे पूर्वातः पश्चिमां प्रति । रेखां च सरलां कुर्या स्तत्र विन्दून् समालिखेः ॥९१॥
प्रतीच्यास्तु समारभ्य पूर्वां प्रति तथोत्तरे । कृत्वा सुसरलां रेखां रापदानि ि्खे र्बहु ॥ ९२ ॥
यावन्ति राक्षराणि स्यु स्तावन्तो विन्दवः स्मृताः ॥९३॥ मध्ये तिलान् समाकीर्य्य कृष्णाञ्छुद्धा-
न्समीक्षितान् । कुर्या यवानामाक्षेपं तेषामुपरि सर्वतः ॥ ९४ ॥ वहि श्चोपरिभागे तु रांबीजं च
समालिखेः । उत्तरे राक्षरं स्थाप्यं दक्षिणे मेति स्पष्टतः॥ पश्चिमे केवलं शून्यं सावकाशं च विन्यसेः
॥ ९५ ॥ मासं दशसहस्राणि विशुद्धः प्रत्यहं जपेः । राममन्त्रं महामन्त्रं सावधानेन चेतसा ॥९६॥
मासान्ते प्रातरुत्थाय स्नानादीनि विधाय च । पूर्वतो निर्मिते कुण्डे होमं कुर्य्या अतन्द्रितः॥९७॥
ब्राह्मणान् भोजयित्वा च विमुक्तः कल्मषाद्ध्रुवम् । भविष्यसीति भो राजन् पुत्रोऽपि च भविष्यति
॥ ९८ ॥ तेजस्वी विजिताक्षश्च पुरुषार्थपरायणः । परमार्थसमायुक्तः शत्रुसंक्षयकारकः ॥ ९९ ॥
सुन्दरः सरलो विद्वान् वाग्ग्मी धर्मिष्ठ ऐश्वरः । चक्रवर्ती महाबाहू राजशक्तिसमन्वितः ॥ १०० ॥

१ क. ' खमास्था ' ।

नमस्ते देवराजाय नमस्ते शोकहारिणे ! नमस्ते धर्मरूपाय नमस्ते गजरूपिणे ॥ ७९ ॥
नमस्ते सर्वगायास्तु नमस्ते बुद्धिशालिने । नमस्ते विश्वरूपाय नमस्ते शक्तिशालिने ॥ ८० ॥
भगवञ् श्रूयतामेषा प्रार्थना कृपयात्वया । समीहा जायते श्रोतुं साकल्येनैव तं विधिम् ॥ ८१ ॥
येनैव विधिना मन्त्र ञ्जपञ्छापात्तव प्रभो । मुक्तः स्यां, कथ्यतां सर्वः सप्रपञ्चो विधिः स च॥८२॥

गज उवाच—

राजञ्छुद्धमना भूत्वा श्रूयतां वचनं मम । यस्मात्ते शापमोक्षः स्यात्तं विधिं ते दिशाम्यहम् ॥८३॥
गङ्गातीरं समासाद्य तत्रैवाहश्चतुष्टयम् । निर्जलेन निरन्नेन संस्थातव्यं त्वया नृप ॥ ८४ ॥
दर्शनं स्पर्शनं सर्व मन्येषां परिवर्ज्य च । केवलं रामरामेति मनसा सञ्जपन् नृप ॥ ८५ ॥
चतुरो दिवसानेतान्नय त्वं वाचि संयतः । प्रसन्नवदनो भूत्वा मूकवच्च समाचरन् ॥ ८६ ॥
पञ्चमे दिवसे प्राप्ते मुहूर्ते ब्रह्मणः शुभे । स्नात्वा भूप शुचि र्भूत्वा परिधाय सुवाससी ॥ ८७ ॥
गङ्गाया मृत्तिकां शुद्धा मदायाऽतिसुखावहाम् । एकां च वेदिकां कुर्य्या ह्रस्वां कोणत्रयीयुताम्॥८८॥
प्रत्येकं तु भुजस्तस्या हस्तत्रयप्रमाणवान् । सरलो श्लक्षणः कार्य्यो दर्शनीयो विशेषतः ॥ ८९ ॥

ऋषय ऊचुः—

भगवँस्ते......निपीय वचनाऽमृतम् । तृप्तिर्न जायतेऽस्माकं शुश्रूषा चैव वर्द्धते ॥ १ ॥ अतः श्रोतुं समिच्छामः सकाशात्ते महामुने । वैष्णवैः कीदृशं पुण्ड्रं कार्य्यं विष्णुपरैरिति ॥ २ ॥

वाल्मीकिरुवाच—

धर्मतत्त्वप्रिया यूय मृषयो ज्ञानवेदिनः । तस्माद्वक्ष्यामि युष्मभ्यं पुण्ड्रं कार्य्यं तु यादृशम् ॥ ३ ॥
चतुर्णामपि वर्णानां यथा ब्राह्मण उत्तमः । सर्वेषामपि धर्माणां तथा वैष्णव उच्यते ॥ ४ ॥
सर्वेषामेव वेदानां पुराणानां च सर्वथा । परहिंसा न कर्तव्याऽत्रैकमत्यं च विद्यते ॥ ५ ॥
अहिंसा परमो धर्मोऽहिंसा हि परमं व्रतम् ! अहिंसा परमं ध्येयं नास्ति धर्म स्ततोऽधिकः ॥ ६ ॥
स एष परमो धर्मः केवलं पृथिवीतले । वैष्णवैः पाल्यते नित्यं तस्माद्वैष्णव उत्तमः ॥ ७ ॥
सुवर्णानि ददानाना मश्वमेधशतानि च । कुर्वाणानां नृणां धर्मो जायते यस्तु नित्यशः ॥ ८ ॥
स धर्मः प्राप्यते नित्यं परहिंसाविवर्जितैः । मानवैस्तु जगत्यास्मिन्नास्ति कोऽप्यत्र संशयः ॥ ९ ॥

वेवेष्टीदं जगत्सर्वं यः स विष्णुः स्मृतो बुधैः । मुच्यते सर्वपापेभ्यो विष्णुसेवापरायणः ॥ १० ॥
वैष्णवा यत्र गच्छन्ति तत्र गच्छन्ति देवताः । स्वयं गच्छति विष्णुश्च ह्येष वेदार्थसङ्ग्रहः ॥ ११ ॥
गङ्गा च यमुना चैव कावेरी च सरस्वती । सरयू र्नर्मदा सर्वा स्तीर्थनद्यः प्रयान्त्यपि ॥ १२ ॥
यत्रैव वैष्णवाः सन्ति तत्राऽयोध्या च काशिका । मथुराऽवन्तिका तत्र पुर्य्यः सर्वस्य पाविकाः ॥ १३ ॥
भूतप्रेतपिशाचाद्या ये च राक्षसयोनयः । सर्वे तस्मात्पलायन्ते यत्र गच्छन्ति वैष्णवाः ॥ १४ ॥
रमन्ते योगिनो यस्मिन् स रामः परिकीर्तितः । परिवेष्टय स्थितः सर्वं सैव विष्णुः समीरितः ॥१५॥
स एव भगवान् कृष्णो गोपीगोपाऽनुरञ्जकः ॥१६॥ तस्य विष्णो र्महाबाहो र्भक्तानां पुण्ड्रसङ्ग्रहः ।
उच्यते श्रूयतां सम्यक् सावधानेन चेतसा ॥ १७ ॥ ऊर्द्ध्वपुण्ड्रं सदाकार्य्यं विष्णुभक्तिपरायणैः ।
पातित्यमन्यथा प्राप्य रौरवं नरकं व्रजेत् ॥ १८ ॥ ऊर्द्ध्वपुण्ड्रधरो विप्रो विष्णुध्यानपरायणः ।
वीतपापः स धर्मात्मा स्वर्गलोकं समश्नुते ॥ १९ ॥ हरेः पादाकृतिं कुर्यान्मध्यच्छिद्रसमन्वितम् ।
ऊर्द्ध्वपुण्ड्रं स्वमोक्षाय दुःखनाशाय सर्वथा ॥ २० ॥ आचम्यैवोर्द्ध्वपुण्ड्रं तु विशुद्धया च मृदा सदा ।

१ कपुस्तके नास्त्येष पाठः ।

कुर्य्याश्चाथान्तरालेषु हरिद्राधारणं तथा ॥ २१ ॥ रैवतकाच्चित्रकूटा द्यादवाद्रेश्च वैष्णवाः ।
मृत्तिकाहरणं कुर्य्यु रूर्द्ध्वपुण्ड्राय सर्वदा ॥ २२ ॥ गङ्गायाः सूर्यकन्यायाः सरय्वा वा मृदा सदा ।
ऊर्द्ध्वपुण्ड्रं शुभं कुर्य्यु वैष्णवा धर्मरक्षकाः ॥ २३ ॥ पूर्वं सिंहासनं कुर्यु स्ततः पार्श्वद्वयं पुनः ।
ततः पश्चाच्च तन्मध्ये लिखेयुः सुन्दरीं श्रियम् ॥२४॥ रजन्या श्रियमालिख्य मृदा वाऽपि च शुक्लया ।
वैष्णवो मुक्ति माप्नोति सर्वकल्मषवर्जितः ॥ २५ ॥

ऋषय ऊचुः—

भगवँस्त्वद्वचः श्रुत्वाऽभवाम च्छिन्नसंशयाः । ऊर्द्ध्वपुण्ड्रस्य भेदोऽन्यः स्याद्यदीह तमप्यलम् ॥
श्रोतु मिच्छाम आख्याहि सर्वसामर्थ्यवानसि ॥ २६ ॥

वाल्मीकि रुवाच—

एकदा सुखमासीनं वैकुण्ठे च रघूत्तमम् । वायुसूनु र्महातेजा ब्रह्मचारी जितेन्द्रियः ॥ २७ ॥
एतादृशान् बहून् प्रश्नान् पप्रच्छ कपिकुञ्जरः । श्रीरामस्तोषयामास तं यथाऽहं तथर्षयः ॥ २८ ॥

१ क ' र्थ्यवन्मुने ' ।

सर्वं वदामि युष्मभ्यं श्रृणुध्व मृषिसत्तमाः । तच्छ्रुत्वा च्छिन्नसन्देहा यूयं तेन भविष्यथ ॥ २९ ॥

श्रीभगवद्वचनं हनूमन्तं प्रति—

ऊर्द्ध्वपुण्ड्रस्य भेदास्तु बहवः सन्ति शाश्वताः । तानहं ते वदिष्यामि श्रूयतां कपिकुञ्जर ! ॥३०॥
मद्भक्ता द्विविधाः प्रोक्ताः शुद्धसत्त्वाः सुबुद्ध यः । मामेव केवलं ह्येके भजन्ते जानकीं विना ॥
जानकीसहितं मां तु भजन्ते सर्वदाऽपरे ॥ ३१ ॥ एतेष्वपि च केचित्तु भक्तिमन्तोऽधिकं मयि ।
जानक्यामेव चान्येषां दृढा भक्तिः प्रजायते ॥ ३२ ॥ मदनुरागिणो भक्ता धारयन्ति च न श्रियम्।
सीताभक्ताः प्रकुर्वन्ति मध्ये विन्दुं श्रियं शुभाम् ॥३३॥ येषां सदाऽऽवयोरेव भक्ति र्भवति वै समा ।
ते शुक्लां रक्तवर्णां च दीर्घां विदधाति श्रियम् ॥ ३४ ॥ कृष्णरूपधरं मां ये वैष्णवाः समुपासते ।
ते कृष्णं चापि रक्तं चाप्यूर्द्ध्वपुण्ड्रं सविन्दुकम्॥ कुर्वन्ति च महाभागा भक्तिभावसमन्विताः॥३५॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायामूर्द्ध्वपुण्ड्रनिरूपणं नाम
चतुर्थोऽध्यायः ॥

ऋषय ऊचुः—

महर्षे कृतकृत्याः स्मो निपीय त्वद्वचोऽमृतम् । इदानीं किञ्चिदन्यद्वै जिज्ञास्यं नोऽस्ति हे विभो ॥१॥
वैष्णवानां च सर्वेषां केन केन च कर्मणा । कालक्षेपस्तु कर्तव्य स्तन्मे ब्रूहि समासतः ॥ २ ॥

वाल्मीकिरुवाच—

एकदा तु पुराकाले गिरिजा गिरिजापतिम् । इदमेव परं तत्त्वं पप्रच्छ श्रद्धया युता ॥ ३ ॥ रुद्रस्तु
तद्वचः श्रुत्वा ह्यत्यन्तप्रीतमानसः । उवाच वचनं चेदं वैष्णवानां शिरोमणिः ॥ ४ ॥

रुद्रोक्तिः पार्वतीं प्रति—

ब्राह्मे मुहूर्ते चोत्थाय भगवन्नाम संस्मरेत् । ततो बाह्यप्रदेशेषु मलमूत्रे[1] विसर्जयेत् ॥ ५ ॥ सप्तवारं
च मृत्स्नाभि र्हस्तौ सम्यग्विशोधयेत् । त्रिवारं सर्वदा कुर्यात्पादयोरपि शोधनम् ॥ ६ ॥ नद्यां
वाऽपि सरस्यां वा तटाके वा महाह्रदे । कूपे वा सर्वदा स्नायाच्छुद्धिमिच्छन्द्विजोत्तमः ॥ ७ ॥
द्वादशानू र्ध्वपुण्ड्रांश्च कृत्वा वै संयतेन्द्रियः । सन्ध्याभिवन्दनं कुर्य्यान्मोक्षकामः सदाद्विजः ॥ ८ ॥
धनुर्बाणधरो रामो द्विभुजः श्यामसुन्दरः । जलजाक्षः किरीटी च सीतया सहितः सदा ॥ ध्यानगम्यो[2]

१ ख. 'त्रंवि'। २ ख. 'म्यस्तु सन्धेयः'।

नुलन्ध्येयः सर्वश्रीवैष्णवैर्हृदि ॥ ९ ॥ शीतोष्णसुखदुःखेषु मित्रामित्रे प्रियाप्रिये । समः स्याद्वैष्णवो नित्यं ज्ञानयोगरतः शुचिः ॥ १० ॥ अनिशं भगवान् रामो जगन्माता च जानकी । भक्त्या त्वनन्यया देवि ध्यातो भक्तं प्रपश्यति ॥ ११ ॥ नित्यवैभवसंयुक्तो नित्यलीलापरायणः । नित्यशोभैकनिलयो नित्यकेलिकरः प्रभु ॥ १२ ॥ सर्वस्य जगतः कर्ता भर्ता हर्ता तथैव च । नित्यमुक्तैः समाकीर्णो हनुमदादिभिः सदा ॥ १३ ॥ सीताशोभितवामाङ्गो रामो राजीवलोचनः । भूनीलेत्यादिदेवीभिः सेविताब्जपदद्वयः ॥ १४ ॥ सर्वात्मा सर्वनामा च शुद्धो बुद्धः सनातनः । सर्वभावमयः स्थायी सर्वगः सर्वदः प्रभुः ॥ १५ ॥ स्वर्णसिंहासनाऽऽसीनः साकेते परमे पदे । नित्यं ध्येयः स तद्भक्तै रेष धर्मः सनातनः ॥ १६ ॥ ततः पश्चान्निराचम्य रामभक्तिसमन्वितः । महोपनिषदं प्रेम्णा मैथिल्याः सततं पठेत् ॥ १७ ॥

गिरिजोवाच—

नाथ ! केयं त्वयाऽऽदिष्टा महोपनिषदश्रुता । मैथिल्यास्तु महालक्ष्म्यास्तन्मे ब्रूहि दयानिधे ! ॥१८॥

---

१ 'ध्याता वुभा विमौ भक्त्या देवि भक्तान्प्रपश्यतः । इति 'क' पुस्तके पाठः ।

रुद्र उवाच--

श्रृणु देवि प्रवक्ष्यामि नित्यां शुद्धां सनातनीम्। महोपनिषदं वेदविश्रुतां वेदरूपिणीम्॥ १९॥

अथ मैथिलीमहोपनिषत्

नित्यां निरञ्जनां शुद्धां रामाऽऽभिन्नां महेश्वरीम्। मातरं मैथिलीं वन्दे गुणग्रामां रमारमाम्॥ १॥

ॐ तत्सत्। रामरूपिणे परब्रह्मणे नमः। अथ ह वैकदा रत्नसिंहासने समारूढां भगवतीं मैथिलीं लाट्यायनः कौञ्जायनः खाडायनो भलन्दनो विल्व ऐलाक्य स्ताल्लुक्ष्य एते सप्त ऋषयः प्रेत्य तामूचुः। भूर्भुवः स्वः। सप्तद्वीपा वसुमती। त्रयो लोकाः। अन्तरिक्षम्। सर्वे त्वयि निवसन्ति। आमोदः। प्रमोदः। विमोदः। सम्मोदः। सर्वां स्त्व ँ सन्धत्से। आञ्जनेयाय ब्रह्मविद्याप्रदात्रि धात्रि त्वां ँ सर्वे वयं प्रणमामहे प्रणमामहे॥

अथ हैनान्मैथिल्युवाच। वत्साः कुशलिनोऽदब्धासोऽ रेपसः किंकामा यूयं प्रत्यपद्यध्वम्॥

ते होचुर्मात र्मोक्षकामैः किं जाप्यं किं प्राप्यं किं ध्येयं किं विज्ञेय मित्येतत्सर्वं नो ब्रूहि॥

---

१ ख. पुस्तकेनास्त्येष पाठः।

सोवाच। राम इत्यक्षरद्वयं जाप्यम्। रिं राम इत्यक्षरत्रयं जाप्यम्। रुं राम इत्यक्षरत्रयंजाप्यम्। रें राम इत्यक्षरत्रयं जाप्यम्। रैं राम इत्यक्षरत्रयं जाप्यम्। रों राम इत्यक्षरत्रयं जाप्यम्। एतदेवहि तारकम्। एतदेव हि बन्धनं बन्धनम्॥ सार्द्धतिस्रो मात्रा ओमित्यत्र। इमानि त्र्यक्षराणि जपंस्तज्जपति॥ त्रीणि वै दुःखानि। आध्यात्मिकमाधिदैविकमाधिभौतिकम्। इमानि त्र्यक्षराणि जपंस्तानि प्रणाशयति॥ विष्णुलोकात्परे लोके साकेते शुभशंसिनि। राजन्त ऽँ रामचन्द्रेति जपन् बन्धाद्विमुच्यते जपन्बन्धाद्विमुच्यते॥ इति प्रथमोपनिषत्॥

परात्परतरो निखिलहेयप्रत्यनीकगुणाकरो जगदादिकारणममिततेजोराशि ब्रह्मादिदेवै रप्युपास्यः स श्री भगवान् दाशरथिरेव प्राप्यो दाशरथिरेव प्राप्यः॥ इति द्वितीयोपनिषत्॥

सकलजगत्कारणवीजं भक्तवत्सलः स एव भगवाञ्ज्ञेयः स एव भगवाञ्ज्ञेयः॥ इति तृतीयोपनिषत्॥



१ क. 'निव'।

ते ह पुनरेनामूचुः। षट्स्वपि मन्त्रेषु कतमो मन्त्रो गरीयान्। कमभिमन्त्र्य स्वकं कल्याणमभिपश्यामः। तन्नो ब्रूहि महेश्वरि ॥

सोवाचैनान्। सर्व एव मन्त्राः सुखप्रदाः शुभप्रदाः क्षेमप्रदा धनप्रदाः। एकमप्यक्षर मुच्चारितं शतजन्मभिरर्जितानि महापातकान्यपि विनाशयति। तत्रापि। षडक्षरो मन्त्रः सर्वोत्कृष्टः। आशुफलप्रदः। सर्वमेव वाञ्छितमभिपूरयति। मोक्षार्थी मोक्षं लभते। स्वर्गार्थी च स्वर्गम्। पुत्रार्थी पुत्रम्। धनार्थी धनम्। विद्यार्थी विद्याम्। यद्यत्कामयते सर्वमग्रतः स्थितमिवाभिपश्यति। ततः स एव सर्वोत्कृष्टः। स एव शिवशरणम्। स एव जाप्यः ॥ इति चतुर्थ्युपनिषत् ॥

इममेव मनुं पूर्वं साकेतपति र्मामवोचत्। अहं हनूमते मम प्रियाय प्रियतराय। स वेदवेदिने ब्रह्मणे। स वशिष्ठाय। स पराशराय। स व्यासाय। स शुकाय। इत्येषोपनिषत्। इत्येषा ब्रह्मविद्या ॥

तेह प्रणम्योचुः। कृतकृत्या वयम्। विदितवेदितव्याः। पूर्णकामाः। संशयाद्वियुक्ताः[1]। त्वं हिमात नून मस्माकं गुरु रस्माकं गुरुः ॥ इति पञ्चम्युपनिषत् ॥ समाप्तोपनिषत् ॥

१ क. ‘ मुक्ताः ’।

इमामेवोपनिषदं पठित्वा श्रद्धयान्वितः। सर्वपापविनिर्मुक्त श्चाचार्य्यस्तवनं पठेत् ॥ २० ॥

गिरिजोवाच—

आचार्य्यः क एवासौ स्तोतव्यो योऽत्र कथ्यते।

रुद्र उवाच—

श्रृणु देवि प्रवक्ष्यामि तत्त्वमत्र सुखावहम् ॥ २१ ॥ सर्वेषामेव मन्त्राणां राममन्त्रः परः स्मृतः। तस्यैव चोपदेष्टारः मुख्याचार्य्या बुधैः स्मृताः ॥ २२ ॥ आचार्य्या बहवोऽभूवन् राममन्त्र-प्रवर्तकाः। किन्तु देवि कलेरादौ पाषण्डप्रचुरे जने। रामानन्देति भविता विष्णुधर्मप्रवर्तकः ॥ २३ ॥ यदा यदा हि धर्मोऽयं विष्णोः साकेतवासिनः। कृशतामेति भो देवि तदा स भगवान् हरिः॥ २४ ॥ रामानन्दयति भूत्वा तीर्थराजे च पावने। अवतीर्य जगन्नाथो धर्मं स्थापयते पुनः ॥ २५ ॥ देशकालानवच्छिन्नो विष्णो धर्मः सुखप्रदः। कालानाच्छादितो ह्येवं सततं सम्प्रवर्तते ॥ २६ ॥ सूर्य्यप्रभो महाकायो विशालाक्षो महामतिः। महावीर्यो महासत्त्वो महातेजा जितेन्द्रियः ॥ २७ ॥

चतुर्णामपि वेदानां वक्ता विद्वाञ्छ्रुतिश्रुतः । सर्वेषामेव शास्त्राणा याथातथ्येन तत्त्ववित् ॥ २८ ॥
अन्तर्यामी महायोगी यतिराजो यतीश्वरः । धर्मात्मा धर्ममूर्तिश्च धर्मरक्षापरायणः ॥ २९ ॥

---

१ यथा ऋग्वेदे—

नित्य श्चाकन्या त्स्वपति र्दमूना उ देवः सविता जजान । भगो वा गोभि रर्यमेमनज्या त्सो अस्मै चारुश्छदयदुतस्यात् ॥

मं. १० अ. ३ सू. ३१ मं. ४

अस्यार्थः–(सविता) (देवः) सूर्यभगवान् (उ) इति निश्चये (यस्मै) यं निखिल कल्याण गुणगणोपेतं वक्ष्यमाणं श्रीरामानन्द-स्वामिनं (जजान) उत्पादयामास; तथा च भविष्यपुराणे 'इत्युक्त्वा स्वस्य बिम्बस्य तेजोराशिं समन्ततः । समुत्पाद्य कृतं काश्यां रामानन्दस्ततोऽभवदिति'। तं सकललोकस्पृहणीयं (नित्यो) 'न जायते म्रियतेवा' इत्यादिज्ञानवान् जीवसमूहो हनूमदादिनित्यजीव समूहो वा, ( स्वपतिः स्वानां धनानां ) स्वकीयानां धनानां वा पतिः स्वामी राजवर्ग इन्द्रो वा, ( दमूनाः ) दानमना दातृवर्ग इत्यर्थः सर्वो ह्येष समूहः ( चाकन्यात् ) चाकनतु–कामयताम् । वा शब्दः समुच्चये । तथा भगो देवोऽर्यमा देवश्च, ईम् इत्य-नर्थको निपातः, ईदृशंवा तेजस्विनं 'रामानन्दः स्वयं प्रभुः' इत्यगस्त्यसंहितोक्तदिशा साक्षान्निखिलब्रह्माण्डनायकं भगवन्तं भाष्यकारं ( गोभिः ) स्तुतिरूपाभि र्वाग्भिः ( अनज्यात् ) व्यक्तीकुर्य्यात् । ( उत ) अपि च ( स्यात् ) अन्योऽपि यो देव-गणोऽस्ति ( चारुः ) रमणीयः । सोऽप्यस्मै ( छदयत् ) कामयताम् ॥

( संशोधकः )

ब्राह्मणो ब्रह्मवर्चस्वी ब्रह्मतत्त्वविशारदः। ब्रह्मवेत्ता तपोराशि र्यतीन्द्रो यतिनां पतिः ॥ ३० ॥
सत्यवक्ता सत्यकर्मा सत्यसन्धो दृढव्रतः। शान्तो दान्तः क्षमायुक्तो विजयी दिक्षु विश्रुतः ॥ ३१ ॥
नाभूद्ब्राह्मणः कश्चिद्राममन्त्रप्रवर्तकः। तस्माद्ब्रह्म कुले जन्म गृहीत्वा भगवान् स्वयम् ॥ ३२ ॥
यत्र स्नात्वा महापापी चापि याति परां गतिम्। तस्मिन्नेव महापुण्ये तीर्थराजे च पार्वति ॥ ३३ ॥
सर्वशास्त्रार्थसम्पन्नः ब्रह्मचारी महाव्रती। त्रिदण्डं[1] धारयन्देवः काश्यां वासं करिष्यति ॥ ३४ ॥
तस्य संस्तवनं देवि महापातकनाशनम् ॥ ३५ ॥

गिरिजोवाच—

रामस्य जगदीशस्याऽयोध्या प्रियतरा मता। तां विहाय कथं नाथ तीर्थराजे मतिः कृता ॥ ३६ ॥
इति नः संशयं छिन्धि तत्त्वविच्छिन्नसंशय।

रुद्र उवाच—

साधु पृष्टं त्वया देवि शृणु तत्त्वं वदामि ते ॥ ३७ ॥

१ क. 'दण्डी'।

एकदा तीर्थराजे हि निर्विण्णो दशवार्षिकः । ब्राह्मणो ब्रह्मतेजस्वी नाम्ना सतु मनःसुखः ॥ ३८ ॥
पितरं मातरं त्यक्त्वा रामभक्तिपरायणः । अनन्यचेतसा तत्र रामचन्द्रं स्मरन् स्थितः ॥ ३९ ॥
प्रायशो भगवद्भक्ता वालरूपं प्रियं प्रभोः । ध्यायान्ति हृदये नित्यं सर्वलोकसुखप्रदम् ॥ ४० ॥
तदेव रूपं स ध्यायं श्चिरकालं तपोऽतपत् । तस्य भक्तिं समालोक्य निर्व्याजामथ सात्त्विकीम् ॥ ४१ ॥
विठ्ठलो भगवांस्तत्र रममाणः स्वमायया । प्रादुर्बभूवतं दास मुद्धर्तुं करुणालयः ॥ ४२ ॥
मनः सुखस्तु तं दृष्ट्वा वाल्यादाहूय सन्निधौ । कस्त्वं कस्मात्समायातः सर्वं ब्रूहि ममाग्रतः ॥ ४३ ॥
त्वदीयां सरलां वृत्तिं कान्तिं चाप्यद्भुतामिमाम् । वचनं मोहनं श्रुत्वा प्रीतिः काऽप्यध्यजायत ॥ ४४ ॥
भगवां स्तद्वचः श्रुत्वा किञ्चित्स्मेरमुखोऽभवत् । पश्चाद्विमोहयामास तमन्यै र्वचनैः प्रिये ! ॥ ४५ ॥
प्रश्नं तं सोऽपि विस्मृत्य वालो वालस्वभावतः । हरिणा साकमत्यर्थ मारेभे तत्र खेलितुम् ॥ ४६ ॥
आप्रहरं समाक्रीड्य वैकुण्ठाधिपति र्हरिः । गन्तुमाज्ञापयेत्येतद्वच स्तस्य पुरोऽब्रवीत् ॥ ४७ ॥
अतीवाऽनुभवन्दुःखं विप्रस्त्वेवमुवाच तम् । तात केन प्रकारेण गन्तुं त्वां कथयाम्यहम् ॥ ४८ ॥
हृदये परमो ह्लादो जायते तव दर्शनात् । किन्तु तात ! कथं त्वाऽहं निरोद्धुं शक्नुयामतः ॥ ४९ ॥

गच्छ तात! सुखं तेऽस्तु ब्राह्मणो निर्धन स्त्वहम्। अरण्यौकाश्च किं तुभ्यं प्रयच्छाम्युपहारकम् ॥५०॥
इत्युक्त्वा स च धर्मात्मा कुट्यां गत्वा च विह्वलः। फलमेकं समादाय हस्ते तस्य समार्पयत् ॥ ५१ ॥
हरि र्हस्तं प्रसार्याथ गृहीत्वाऽपि च तत्फलम् । उवाच वचनं चेद मश्रुपूर्णविलोचनः ॥ ५२ ॥
हे तात ! त्वन्मुखाम्भोजविलसच्छब्दरेणवः । सुखयन्ति मनोऽस्माकं तर्पयन्ति च चेतनाम् ॥ ५३ ॥
भगवत्प्रेरणाप्राप्ताऽकस्मिकास्मत्समागमः। शुभाय सर्वदा भूयादित्येवाशास्महे वयम् ॥ ५४ ॥
त्वदीयां मधुरां वाच माचम्यैव मनःसुख। अन्वभावि सुखं यत्त त्स्थायिता मेतु सन्ततम् ॥ ५५ ॥
कौतःकुतस्तु सञ्जातो नदीनौकासमागमः । आगमाय भवेत्तात सुखशान्त्योः सदाऽऽवयोः ॥ ५६ ॥
हारिणा ते स्वभावेन मनःसुख ! हृता वयम्। परवन्तः प्रयामोऽतः किं कुर्य्याम विधेःपुरः ॥ ५७ ॥
चञ्चलायां मनोभूमौ जाता या प्रेमवल्लरी। स्मृतिशीतजलेनेयं सेचनीया प्रयत्नतः ॥ ५८ ॥
सत्यमेवासि शान्तात्मन्मनः सुख! मनःसुखः। केवलं ते वियोगोऽस्ति सन्तापाय च मादृशाम् ॥५९॥
अहमप्यस्मि हे तात ब्राह्मण स्तद्वदस्व मे। किं तुभ्यं सम्प्रयच्छामि यत्ते हितकरं भवेत् ॥ ६० ॥

१ ख. 'यैः'

ब्राह्मणोऽप्यवदद्वाच मन्यस्मिञ्जन्मनीह वै । यथाकथञ्चित्सम्बन्ध आवयोः स्याद्ध्रुवोऽचलः ॥ ६१ ॥
एवमस्त्विति चोक्त्वा स हरि रन्तर्दधौ किल। गतमोहो द्विजेन्द्रःस दध्यौ किं याचितं मया ॥ ६२ ॥
यदेव बन्धनं छेत्तुं त्यक्त्वा गृह मिहाऽऽगतः । तदेव बन्धनं नूनं मोहात्सम्प्रार्थितं मया ॥ ६३ ॥
पश्चात्तताप धर्मात्मा बह्वित्थं दुःखविह्वलः । अन्नान्नानि न जग्राह निद्रां लेभे न वा निशि ॥ ६४ ॥
भक्तस्य तादृशीं खिन्नां दशां दृष्ट्वा रघूत्तमः। रात्रौ स्वप्ने कुमाराया ऽऽत्मानं प्राकटयत्प्रभुः ॥ ६५ ॥
गतबन्धोऽपि भक्तानां निबद्धः प्रेमबन्धनैः । तेनैव बालरूपेण ह्युतपतस्थौ प्रभुः पुनः ॥ ६६ ॥
धर्मात्मानं च तं विप्रं निमग्नं शोकसागरे । सम्यक तोषयामास भगवान् रघुनायकः ॥ ६७ ॥
पूरणाय प्रतिज्ञाया स्तस्या एव हरिः प्रिये ! प्रयागे तीर्थराजे स्वमाहिमानमाद्दियुतत् ॥ ६८ ॥

गिरिजोवाच—

नाथ त्वद्वचनं श्रुत्वा संशयो मे स निर्गतः। ततः परं च किं कार्य्यं वैष्णवै स्तन्निबोधय ॥ ६९ ॥

रुद्र उवाच—

मिथ्यावादो विवादश्च परिहासो वृथाश्रमिः । दुर्जनानां च संसर्गः दर्शनं भाषणं तथा ॥ ७० ॥

द्यूतं मिथ्यापवादश्च हिंसनं परनिन्दनम् । त्याज्यान्येतानि कार्य्याणि वैष्णवैः सात्त्विकैः सदा ॥७१॥
कुर्वन्नेतानि कर्माणि सततं वैष्णवब्रुवः । अतिक्रम्य सदाचारं न हरिं प्राप्नुयात्क्वचित् ॥ ७२ ॥
सत्यमेव परो धर्मः सत्यमेव परं तपः । सत्यमेव व्रतं पुण्यं तस्मा त्सत्यं समाचरेत् ॥ ७३ ॥
आचार्य मनुवर्तेत नाऽचरेत्तस्य विप्रियम् । एवं कुर्वन्सदा देवि ! मानवोऽत्र प्रशस्यते ॥ ७४ ॥
इत्येवं पार्वतीं रुद्रः कालक्षेपविधिं पुरा । आदिशत्स च युष्मभ्यं श्रावितोऽद्य महर्षयः ! ॥ ७५ ॥

ऋषय ऊचुः—

श्रुतवन्तो वयं सर्वं धर्ममार्गं महामुने ! त्वत्कृपातः कृपासन्धो ! कार्तार्थ्यं च गता वयम् ॥ ७६ ॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां कालक्षेपविधिनिरूपणं नाम
पञ्चमोऽध्यायः ।

ऋषय ऊचुः—

महाभाग ! श्रुतं सर्व मस्माभि र्भाग्यशालिभिः । संशयोऽत्र विनष्टो नः कृपया ते महामुने ॥ १ ॥
कस्मिं स्तीर्थे च संस्थाने विरक्तै वैष्णवै र्विभो । कालक्षेपः प्रकर्तव्यः कृपया ब्रूहि नोऽधुना ॥ २ ॥

वाल्मीकि रुवाच–

ऋषयः ! श्रूयतां वच्मि युष्माकं यन्मनीषितम् । वेदेषु यच्च शास्त्रेषु दृष्टं तच्च निशम्यताम् ॥ ३ ॥
अयोध्या परमा पुण्या सर्व पापप्रणाशनी । अखिलेभ्यश्च जन्तुभ्यः सततं मोक्षदायिनी ॥ ४ ॥
अयोध्यायाः पथो रेणु र्यद्युड्डीय शिरो लगेत् । मुच्यते सर्वपापेभ्यो नरो नास्त्यत्र संशयः ॥ ५ ॥
रमया च रमाकान्तो भ्रातृभिः सकलैः सह । हनूमदादिभिः स्वीयैः सर्वैः पारिषदैः सह ॥ ६ ॥
यत्र लीलामयो लीलां कुरुते च निजेच्छया । लोकानां पावनी यत्र सरयू र्भाति नित्यशः ॥ ७ ॥
यस्यामेव निमज्जन्ति चत्वारो भ्रातरः सदा । जगन्माता महालक्ष्मी श्चापि प्रेमपुरस्सरम् ॥ ८ ॥
यज्जलं स्प्रष्टुकामास्ते ब्रह्माद्या देवयोनयः । आकांक्षन्ति भुवो वासं वन्द्या वन्द्यजनैरपि ॥ ९ ॥
एवं गुणयुताऽयोध्या साकेताऽपरनामिका । रामभक्तैः सदा सेव्या तत्पदाकाङ्क्षिभिर्नरैः ॥ १० ॥
नित्या कृष्णपुरी दिव्या कृष्णलीलास्थली च या । यत्र स भगवान् कृष्णो नित्यलीलाकरः प्रभुः
॥ ११ ॥ गोपिकाभिश्च गोपैश्च चिरं चिक्रीड धर्मरक् । सा मथुराऽपि संसेव्या भुक्तिदा मुक्तिदा ध्रुवा
॥१२॥ द्वारका नगरी रम्या यां द्वारीकृत्य मानवाः । अनायासत एवेतः प्रयान्ति परमां गतिम् ॥१३॥

धनुषा च शराभ्यां चाऽङ्क्यन्ते ये तत्र मानवाः । शङ्खेन चक्रकेणापि तेऽपि यान्ति परां गतिम्॥१४॥
साऽपि सेव्या नरै र्नित्यं धर्ममोक्षाभिलाषिभिः॥१५॥ संसेव्यो वैष्णवै र्नित्यं यादवाद्रिश्च निश्चलः ।
यत्र वै[1] भगवान् कृष्णो विजहार स्वमायया ॥ १६ ॥ चित्रकूटश्च संसेव्यो यत्र त्रैलोक्यपावनः ।
सीतया सहितो रामः सबन्धु र्वासमाकरोत् ॥ १७ ॥ कामदं कामदं यत्र परिक्रामन् नरः सदा ।
विमुक्तः सर्वदुःखेभ्यः शीघ्रं याति परां गतिम्॥१८॥माया चावन्तिका काञ्ची काशी चापीह मुक्तिदा ।
एवमादिषु तीर्थेषु वस्तव्यं वैष्णवैः सदा ॥ १९ ॥ प्रयागश्च महापुण्य स्तीर्थराजश्च साक्षयः ।
यत्र कुत्रापि गङ्गायाः सरय्वाश्च सुखावहे ॥ तटे चापि निवस्तव्यं कालिन्द्या अपि शोभने ॥ २० ॥

ऋषय ऊचुः–

महर्षे वेदयोने ते निपीय वचनाऽमृतम् आपन्ना स्तृप्ति मत्यन्तां वयं तत्त्वबुभुत्सवः ॥ २१ ॥
इदानीं श्रोतु मिच्छाम आश्रमेषु चतुर्ष्वपि । वैष्णवानां विरक्तानां क इति ब्रूहि तत्त्वतः ॥ २२ ॥

वाल्मीकि रुवाच–

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यति स्तथा । अत्र चत्वार एवैते नित्यमाश्रमिणो मताः ॥ २३ ॥

---

१ ख. 'श्रीभ' ।

ब्रह्मचारी द्विधा प्रोक्त उपकुर्वाणकोऽपरः। नैष्ठिकश्च तथा ज्ञेयः सर्वमङ्गलकारकः ॥ २४ ॥
उपकुर्वाणको ज्ञेयो व्रतान्ते स्नातको भवन्। नैष्ठिकस्तु सदाशुद्धः पुण्यचेता जितेन्द्रियः ॥ २५ ॥
भगवन्तं सदा ध्यायन् पुरुषार्थपरायणः। गुरुं शुश्रूषमाणो हि नित्यं गुरुकुले वसेत्। विरक्तो धृत-
कौपीनो नैष्ठिकः स निगद्यते ॥ २६ ॥ वेदं वेदौ च वेदान्वा द्विजोऽधीत्य गुरोः कुलात्। दारान्
गृह्णाति योवै स सद्गृहस्थ इति स्मृतः ॥ २७ ॥ स्वधर्मे वर्तमानास्तु शूद्रा अपि तथा स्मृताः॥ २८ ॥
तृतीये वयसि प्राप्ते सञ्जाते पुत्रपुत्रके। दारैः सहैकको वापि द्विजो गच्छन् वनं शुभम्। वानप्रस्थः
स विज्ञयो ब्रह्मज्ञानपरायणः ॥ २९ ॥ चतुर्थे चाश्रमे तिष्ठन् याति विद्वाद्भि रीरितः ॥ ३० ॥ चतुर्धा
यतयः प्रोक्ताः कुटीचकबहूदकौ। हंसः परमहंसश्च धर्मव्रतपरायणः ॥ ३१ ॥ यतीनां बाह्यचिह्नानि
गृहीत्वा यस्तु सन् द्विजः। स्वगृहेष्वेव वर्तेत विरक्तः स कुटीचकः ॥ ३२ ॥ गृहं त्यक्त्वा विरक्ता ये
भिक्षया धारयन्नसून्। यतिलिङ्गैः समायुक्तः स द्वितीय उदाहृतः ॥ ३३ ॥ तृतीयः शास्त्रसम्पन्नो
वेदविद्वेदकर्मकृत्। शरीरे निस्स्पृहो योगी प्राणायामे रतः सदा ॥ ३४ ॥ ब्राह्मणः क्षत्रियो वैश्यः
परवैराग्यवान् सुधीः। प्रव्रजन्धार्मिकश्रेष्ठ स्तुरीयः कथ्यते बुधैः ॥ ३५ ॥ काषायं ब्रह्मसूत्रंच

त्रिदण्डं धारयन् यतिः। पुनानः स्वोपदेशेन लोकाँश्च विचरेद्भुवि ॥ ३६ ॥ ये गृहस्था गृहस्थास्ते वैष्णवा धर्मचारिणः। विरक्तानां च विषये श्रूयतां श्रुतिचोदना ॥ ३७ ॥ विरक्ता रामभक्ता ये ते द्विधा समुदीरिताः। केचित्सन्न्यासिनः केचिन्नैष्ठिकब्रह्मचारिणः ॥ ३८ ॥ ये द्विजास्तु कृतोद्वाहा भगवत्पाद माप्नुयुः। विप्लुतब्रह्मचर्यास्ते बुधैः सन्न्यासिनः स्मृताः ॥ ३९ ॥ बाल्यादारभ्य संस्कारो येषा मस्ति च वैष्णवः। द्विजास्तेऽदृष्टसंसारा नैष्ठिकब्रह्मचारिणः ॥ ४० ॥ निर्ममा निरहङ्काराः पञ्चसंस्कारसंयुजः। ये शूद्रा भगवद्भक्तास्ते च भागवताः स्मृताः ॥ ४१ ॥ इति श्रुत्वा महात्मान ऋषयो धर्मवेदिनः। ऊचिरे वचनं चेदं बद्धाञ्जलिपुटा स्तदा ॥ ४२ ॥

ऋषय ऊचुः—

कृतकृत्या वयं भूताः श्रुत्वा ते परमाद्भुतम्। वचनं मुनिराट् तस्माद् दया सिन्धो ! विदांवर ॥४३॥ अन्ये ये च सदाचारा वैष्णावानां श्रुतौ स्थिताः। तान्नो ब्रूहि महाभाग करुणैकमहालय ॥ ४४ ॥

वाल्मीकि रुवाच—

गुरु र्ब्रह्मा गुरु र्विष्णु र्गुरु र्माता गुरुः पिता। गुरु र्बन्धु र्गुरु मित्रं गुरु रेव सुखप्रदः ॥ ४५ ॥

प्रातरुत्थाय शिष्यः स्वगुरोः सम्मुख मागतः । साष्टाङ्गं प्रणमेन्नित्यं परया श्रद्धया ऽन्वितः ॥ ४६ ॥ रुष्टेषु सर्वदेवेषु रक्षतीह रमापतिः । क्रुद्धे रमापतावत्र गुरू रक्षां करोति ह ॥ ४७ ॥ को ऽपि रक्षाकरो नास्ति गुरौ संरुष्टतां गते । ततः सर्वप्रयत्नेन प्रसाद्यो गुरु रञ्जसा ॥ ४८ ॥ पञ्चसँस्कारसंयुक्तो दासान्तं नाम चावहन् । विष्णुभक्तिसमायुक्तो विरक्तो वैष्णवः स्मृतः ॥ ४९ ॥ यो न द्वेष्टि नच द्रोग्धि नाऽनाचारं चरत्यपि । रामभक्तिसमापन्नो[1] विरक्तो वैष्णवः स्मृतः ॥ ५० ॥ यस्तु जातिस्वभावेन पूर्वजन्मार्जितस्य वा । दुष्कर्मणः फलेनैव प्राप्तया दुर्धिया नरः॥ अपरान्निष्फलं द्वेष्टि स वै चाण्डालवैष्णवः ॥ ५१ ॥ विष्णुचिन्हधरान् यस्तु वृथा निन्दाति मूर्खराट् । वैष्णवानां समाजात्तु निष्काश्यः स च दुर्मतिः ॥ ५२ ॥ विष्णुभक्तान् समुद्दिश्य दुर्वाच्यं वक्ति यो नरः । मुखं नैव मुखं तस्य पात्रं निष्ठीवनस्य[2] तत् ॥ ५३ ॥ भगवत्सान्निधावेव राममन्त्रस्य दीक्षया । दीक्षणीयः सदा शिष्यो विरागी निश्चलोऽनघः ॥ ५४ ॥ शङ्खचक्रधरो वाऽथ धनुर्वाणाङ्कनं दधत् । सर्वपाप-

१ क. 'सन्नो'। २ ख. 'ष्ठि ष्ठी'।

विनिर्मुक्तः प्रयाति परमां गतिम् ॥ ५५ ॥ धन्वनेति[1] जपन्मन्त्रं शार्ङ्गपाणिं च संस्मरन् । वाहो र्वाम स्य मूले तु धनुषा तापयेद्गुरुः ॥ ५६ ॥ तथा सुपर्णमित्यादि[2] मृजीत[3] इति चादरात् । जपन्द-क्षिणमूले तु वाणाभ्यामङ्कयेत्पुनः ॥ ५७ अतः परं प्रवक्ष्यामि सन्ध्याविधि मनुत्तमम् । ब्राह्मे मूहूर्ते चोत्थाय राम नाम च संस्मरेत् ॥ ५८ ॥ प्रातःकालीन मखिलं कृत्यं कुर्य्यादतन्द्रितः । मलमूत्र-विसर्गाय वहिर्देशं समाश्रयेत् ॥ ५९ ॥ नद्यास्तटे न कर्तव्यं मलमूत्रविसर्जनम् । दन्तान्धावेन्नवा तत्र नोद्गिरेत्पित्तकं कफम् ॥६०॥ प्रवाहे वा तटाके वा विशुद्धे[4] निर्मले जले । देहदोषनिवृत्यर्थं सविधि

---

१ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रो रपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ यजु० २९ । ३९ ॥

२ सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ यजु० २९ । ४८ ॥

३ ऋजीते परिवृङ्ग्धि नोऽश्मा भवतु न स्तनूः । सोमो अधिब्रवीतु नोऽदितिः शर्म यच्छतु ॥ यजु० २९ । ४९ ॥

४ ख. ‘ गभीरे निर्म ’ ।

विनिर्मुक्तः प्रयाति परमां गतिम् ॥ ५५ ॥ धन्वनेति[1] जपन्मन्त्रं शार्ङ्गपाणिं च संस्मरन् । वाहो र्वाम स्य मूले तु धनुषा तापयेद्गुरुः ॥ ५६ ॥ तथा सुपर्णमित्यादि[2] मृजीत[3] इति चादरात् । जपन्द-क्षिणमूले तु वाणाभ्यामङ्कयेत्पुनः ॥ ५७ अतः परं प्रवक्ष्यामि सन्ध्याविधि मनुत्तमम् । ब्राह्मे मूहूर्ते चोत्थाय राम नाम च संस्मरेत् ॥ ५८ ॥ प्रातःकालीन मखिलं कृत्यं कुर्य्यादतन्द्रितः । मलमूत्र-विसर्गाय वहिर्देशं समाश्रयेत् ॥ ५९ ॥ नद्यास्तटे न कर्तव्यं मलमूत्रविसर्जनम् । दन्तान्धावेन्नवा तत्र नोद्गिरेत्पित्तकं कफम् ॥६०॥ प्रवाहे वा तटाके वा विशुद्धे[4] निर्मले जले । देहदोषनिवृत्यर्थं सविधि

---

१ धन्वना गा धन्वानाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रो रपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ यजु० २९ । ३९ ॥

२ सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ यजु० २९ । ४८ ॥

३ ऋजीते परिवृङ्गिध नोऽश्मा भवतु न स्तनूः । सोमो अधिब्रवीतु नोऽदितिः शर्म यच्छतु ॥ यजु० २९ । ४९ ॥

४ ख. ‘ गभीरे निर्म ’ ।

स्नानमाचरेत् ॥ ६१ ॥ सूर्य्यस्य दर्शनात्पूर्वं सन्ध्यां कुर्वीत सद्द्विजः । अन्यथा कुरुते यस्तु ब्रह्महा स भवेद्ध्रुवम् ॥ ६२ ॥ वहिः सन्ध्यां प्रकुर्वीत सकुशः सकलो द्विजः ॥ ६३ ॥ अथ यत्र शुचि देशो यत्र स्यान्मनसः सुखम् । तत्रापि सन्ध्यां कुर्वाणो नरः पुण्यपरो भवेत् ॥ ६४ ॥ सूर्य्यस्याभिमुखं तिष्ठन् क्षिपेत्त्रीनुदकाञ्जलीन् । तच्चक्षुरितिमन्त्रस्य पाठं कुर्य्यात्ततः परम् ॥ ६५ ॥ सायङ्काले च सूर्य्येऽस्तं यातिनद्यास्तटे स्थितः । सायं सन्ध्यामुपासीत सततं वैदिको द्विजः ॥ ६६ ॥ श्रीरामः शरणं[1] मेति मन्त्रं सार्द्धशतं जपन् । सन्ध्यानन्तरं, विप्रो मुच्यते सर्वकिल्बिषात् ॥ ६७ ॥ वैष्णवैः सततं धार्य्या श्रीतुलसी द्वियष्टिका । तां त्यजन् पुरुषो मूढो भ्रष्टसंस्कार एव हि ॥ ६८ ॥ यस्य कण्ठे न संलग्ना वैष्णवस्य च दुर्मतेः । तुलसी राजते, सोऽथ नाममात्रेण वैष्णवः ॥ ६९ ॥ तस्य स्पृष्टमवन्नादि न ग्राह्यं वैष्णवैः क्वचित् । दूरं चाण्डालवत्त्याज्यो द्विजकर्मवहिष्कृतः ॥ ७० ॥ भोजनस्य विधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः ! । शुद्धे च भोजनागारे स्थाने पीठासने शुभे ॥

१ क. 'णेतीमं मन्त्रं'।

उपाविश्य सुखं धीमान् कुर्य्याद्भोजनमुत्तमम् ॥ ७१ ॥ पादद्वयेन संस्पृश्य ह्येकेनैव च वा भुवम् ।
भुञ्जानः सर्वकल्याणं सन्ततं सोऽनुपश्यति ॥७२॥ वक्त्रस्यानुगुणान् पिण्डान् भक्षयेच्च शनैः शनैः ।
शीघ्रत्वमाधिकुर्वाणो राक्षसत्वं निगच्छति ॥ ७३ ॥ शयानो नहि भुञ्जीत नोत्थितोऽपिकदाचन ।
चलन्नापि न भुञ्जीत न वदन्न हसन् रुदन् ॥ ७४ ॥ भुञ्जानो मौनमालम्ब्येद्ब्रूयाच्चेन्नाधिकं क्वचित् ।
अत्यन्तभाषणादन्नदेवः कोपं समेष्यति ॥ ७५ ॥ सदा भोजनकालेतु नरो हृष्टो भवेत् खलु ।
विषीदँश्चिन्तयन्वापि भोक्ता नान्नफलं लभेत् ॥७६॥ यादृशी भावना यस्याऽशनकाले भवेदिह । तादृशी
तस्य वै बुद्धिर्जायते नाऽत्र संशयः ॥७७॥ ब्रह्मवर्चसकामस्तु नित्यं पूर्वमुखो भवन् । सर्वदा मौनमा-
स्थाय भुञ्जीयाादिह निश्चलः ॥७८॥ वीर्य्यकामश्च धीकामः सततं पश्चिमाननः। यशस्कामस्तु भुञ्जी-
यात्...उदङ्मुखः॥७९॥ ग्रासं ग्रसीत सम्पूर्णं साङ्गुष्ठाङ्गुलिभिर्मुदा। चप्चपेति न कुर्वीत न चान्यत्राऽ
वलोकयेत् ।।८०॥ पर्युषितं न भोक्तव्यं विद्यावृद्ध्यभिलाषिभिः । यातयामं गतरसं भोजनं नैव भक्षयेत्
॥८१॥ घृतपक्वं पयःपक्वं शाकं दधितिलानि च। मौद्गानि शुष्कवस्तूनि पर्युषितानि भक्षयेत् ॥८२॥

अभक्ष्यभक्षणाज्ज्ञानात्सद्यः पतति वै द्विजः। भक्ष्याभक्ष्यविचारेण ततो वर्तेत नित्यशः ॥ ८३ ॥
संस्पृष्टं यद्भवेदन्नं लशुनेन पलाण्डुना। तद् द्विजैर्नैव भोक्तव्यं सदाचारपरायणैः ॥ ८४ ॥
लशुनं गृञ्जनं चैव पलाण्डुकवकानि च। कृमिभिर्मक्षिकाभिश्च केशरोमनखैश्च वा ॥ संस्पृष्टं नैव भोक्तव्यमन्नंक्वापि द्विजोतमैः ॥ ८५ ॥ गवा घ्रातं च, दृष्टं वा शुना वा शूकरेण वा। अवलीढं न भोक्तव्यं काककुक्कुटमूषकैः ॥ ८६ ॥ छत्राकं च मधूकं च नारिकेलासवं तथा। सुरास्पृष्टं सुरापैश्च स्पृष्टमग्राह्यमेव तु ॥ ८७ ॥ यदन्नमवलोक्यैव हृदि खेदो विजायते। तदन्नं नैव भोक्तव्यं धर्म-रक्षापरायणैः ॥८८॥ आपणीयं न भुञ्जीत लवणं तैलसर्पिषी। गुडंच शर्करां हित्वा कदाचन हि वैष्णवैः ॥८९॥ रविवारे दिवा चाथ सप्तम्यां च दिवा निशि। धात्रीफलं न भोक्तव्य मायुष्कामैः कदाचन ॥९०॥ उत्पलं शणशाकं च वाट मौदुम्बरं फलम्। श्रेयस्कामो न भुञ्जीया दाश्वत्थं च कदाचन॥९१॥ मधु मांस न भोक्तव्यं धूम्रपानं न कारयेत्। एकादश्यां च सर्वान्नं दूरतो वैष्णवस्त्यजेत् ॥ ९२ ॥ एतान्युक्तान्यभक्ष्याणि समासेन महर्षयः। इदानीं वच्मि युष्मभ्यं भावनाविषये .... .... ॥ ९३ ॥

याद्दशी भावना यस्य तादृशं लभते फलम् । सत्यमेतद्धि मन्तव्यं शङ्कालेशो न विद्यते ॥ ९४ ॥
यदि दुःखी नरो नम्रो भूत्वा भगवतः पुरः । शरणं याचते दीनोऽवश्यमुद्धरतीह सः ॥ ९५ ॥
एकस्य ब्रह्मपुत्रस्य सत्यामेव कथामहम् । श्रावयामि च तां यूयं शृणुध्वं ह्येकमानसाः ॥ ९६ ॥
गोदापुरे महापुण्ये स्थाने कश्चिद्द्विजाग्रजः । आसीन्निर्धनो दीनः शोकचिन्तातुरो महान् ॥ ९७ ॥
वेत्ता सर्वशास्त्राणां धर्मतत्त्वविशारदः । गुणवान्रूपवान् सम्यङ् मृदुभाषी दयापरः ॥ ९८ ॥
एकदा स भ्रमन् विप्रो जीविकाहेतवे क्वचित् । शुश्राव कस्यचिद्राज्ञो दातु र्नाम यशस्विनः ॥९९॥
अन्विष्यन् स च तं भूपं ब्राह्मणोऽग्रे चचाल वै । दश क्रोशान् समाक्रम्य प्राप्तवांश्च निशामुखे॥१००॥
तस्मिन्नेव च विख्याते नगरे लोकपूरिते । यत्र दानी महोदारः वसन्नासीत्स भूपतिः ॥ १०१ ॥
रात्रौ श्रान्तः स वै विप्रः कस्मिंश्चिद्देवमन्दिरे । सुखं सुष्वाप शोकाढ्यः क्षुत्पीडापीडितोऽपि सः ॥१०२॥
प्रातरुत्थाय विप्रः स सान्ध्यं कर्म समाप्य च । सम्यग्रामार्चनं कृत्वा जग्राह चरणोदकम् ॥ १०३ ॥
राजासने समासीने तस्मिन्दातरि राजनि । उपेयाय स तं विप्रो यद्यप्यासीद्बुभुक्षितः ॥ १०४ ॥

आशीर्वचोभिः संवर्ध्य राजानं तमुवाच सः । विष्णुभक्तो महाराज विष्ण्वाराधनतत्परः ॥ १०५ ॥
गोदापुरस्य विप्रोऽहं सर्वशास्त्रविशारदः । उत्तमे च कुले जातो भाग्याद्दैन्यमुपागतः ॥ १०६ ॥
केवलं दुःखभोगाय जन्मादाय भ्रमाम्यहम् । श्रुत्वा तव यशो राजन् विह्वलस्ते दिदृक्षया ॥ १०७ ॥
भ्रमन्नेवान्तिके राजँस्तवायातोऽस्मि भाग्यतः । पश्यामि किं भवत्यत्र सुखं वा दुःखमेव वा ॥ १०८ ॥
यो दत्तो नापरेभ्यश्च त्वया शीलवता नृप । तं नकारमपि प्राप्य न हृष्यामि कथं, वद ॥ १०९ ॥
[1]दीनानामाननं द्रष्टुं जगदीशोऽपिनेच्छति । तद्यदित्वमपि प्रार्थ्य प्रार्थनां न शृणोषि मे । कोऽपराध-स्तवात्र स्याच्छ्रेष्ठस्य पथि गच्छतः ॥ ११० ॥ न विचार्य्यमिदं राजन्मे वृथाऽगमनश्रमः । त्वादृशानां परं पुण्यं दर्शनं प्रददाति ह ॥ १११ ॥ धनं द्विधेत्येकमुदर्य्यमुच्यते भवादृशां दर्शनमेव चापरम् । अभून्न लब्धं यदि चादिमं ततः कथं भवेदूनमिदं वदा[2]न्तिमम् ॥ ११२ ॥ येन ते पुण्यपुञ्जेन देहः पुण्यमय स्तव ।

---

१ खपुस्तके दीनानमित्यस्य तद्यदीत्यस्य च मध्ये 'अतएव जगन्नाथः श्वशुरालयमिच्छति' इत्याधिकः पाठः । सचके-नचित्प्रक्षिप्त इति प्रतिभाति ॥

२ क, 'तान्ति'।

पुण्यात्मना कृतो धात्रा कस्तद्वर्णयितुं क्षमः ॥ ११३ ॥ त्वद्धनं त्वद्घनज्ञानं त्वत्तेजस्त्वत्तपो नृप । अशेषं शेषराजोऽपि वक्तुं शक्नोति न क्वचित् ॥ ११४ ॥ यत्र तत्र तु वारीणि ददात्येव हि वारिदः । चेच्चातकमुखे विन्दु र्नागाद्दोषो घनस्य कः ॥ ११५ ॥ पिपासितो जलाधारं, धूमं दृष्ट्वा बुभुक्षितः । दृष्ट्वा राजानमायान्ति प्रजादैन्यनिवारकम् ॥ ११६ ॥ इत्येवागतवानस्मि राजँस्ते सन्निधावहम् । यथोचितं प्रतीयेत क्रियतां शीघ्रमेव तत् ॥ ११७ ॥ वासराणि व्यतीतानि पञ्च मेऽनश्नतः किल । ततो न स्थातुमीशेऽहं पीडितो हि बुभुक्षया ॥ ११८ ॥ ब्राह्मणस्य वचः श्रुत्वा किञ्चिन्नोवाच भूपतिः । ततः प्रत्याजगामाशु स विप्रो राममन्दिरम् ॥ ११९ ॥ तत्र गत्वा महादीनो विवर्णवदनो द्विजः । अञ्जलिं मस्तके न्यस्य रुदन्नेव पपात सः ॥ उवाच वचनं चेदं ह्यवरुद्धगलोऽपि स ॥ १२० ॥ रे दैव ! पापाधम ! चिन्त्यतेऽद्य लाभः स्वकीयो वद मे बधे कः । लाभोऽपि चेदस्तु वधे द्विजस्य पापं महन्मूढ न पश्यसि त्वम् ॥ १२१ ॥ किं तेऽपराद्धं भ्रमतोऽपि तथ्यं वदेति साक्ष्यं दददात्मनस्त्वम् । येन प्रकोपोऽस्ति मयि त्वदीयो ज्वलन्महाकालविबुद्धवह्निः ॥ १२२ ॥ हा राम ! रामोऽसि यदि, त्वमद्य प्राणान्

गृहीत्वा मम पञ्च नीचान् । एकं तु मृत्युं कृपया प्रयच्छ त्वदीयमौदार्य्यमितिप्रसिद्धम् ॥ १२३ ॥ हे जानकि त्वं जननी मदीया सदाऽम्ब ! धत्से हृदि वत्सलत्वम् । अतस्तवाग्रेऽपि तथैव याचे प्रदेहि मे मृत्यु मिहैव मातः ! ॥ १२४ ॥ एवंच विकलं दृष्ट्वा स्वभक्तं भक्तवत्सलः । वालरूपं समादाय प्रादुर्भूतो महाप्रभुः ॥ ॥ १२५ ॥ माता च जानकी तत्र दिव्यरूपधराऽनघा । नितरां करुणामूर्ति राविर्भूता महेश्वरी ॥ १२६ ॥ उत्थाप्याशु च तं दीनं पतितं भुवि विह्वलम् । उरसा योजयामास भगवान् भक्तभावनः ॥ १२७ ॥ माता च जानकी तत्र पतितं तमनाथवत् । तोषयामास सदया शिरस्याघ्राय, तं पुनः ॥ १२८ ॥ उवाच भगवांस्तत्र वत्स ! ब्रूहि किमिच्छसि ! किमर्थं शोचसे नित्यं भक्तो भूत्वा मम प्रियः ॥ १२९ ॥ सततं त्वामहं वत्स ! संस्मरामि क्षणे क्षणे ! क्षणमेकमपि प्रेष्ठ ! त्वां विनाऽहंन जानकी ॥ १३० ॥ केवलं ते परीक्षाया इदंव्यापारवानहम् । ब्रूहि प्रिय ! प्रियं ! ब्रूहि वत्स ! ब्रूहि किमिच्छसि ॥ १३१ ॥ वक्तव्यं किं न वक्तव्यं किन्नु कर्तव्य मित्य-

लम् । तदानीं तस्य विप्रस्य नासीद्द्ज्ञानं किमप्यथ ॥ १३२ ॥ ययो रजः कणं प्राप्तुं तपन्ति परमं तपः । ऋषयो मुनयश्चैव देवा देवपति इव तौ ॥ १३३ ॥ प्रेमाश्रुभिः प्रभोः पादौ क्षालयन् ब्राह्मणः स च । आनन्दाम्बुनिधौ मग्नः पादयोर्हि लुलोठ सः ॥ १३४ ॥ दीनबन्धु र्जगन्नाथो भगवान् भक्तभावनः । बलादुत्थाप्य तं दासमुरसाऽऽश्लिष्य स प्रभुः ॥ १३५ ॥ उवाच वचनं चेदं मधुरं मधुराक्षरम् । शोकं जहाहि सकलं वत्स ! गच्छ गृहं पुनः ॥ १३६ ॥ सकलैव च सम्पत्ति र्वर्तते ते गृहेऽधुना । गत्वा तत्र सुखेनैव तिष्ठ त्वं यावदिच्छसि ॥ १३७ ॥ ततः परं परतरं मदीयं लोकमाप्स्यसि । गच्छाऽधुना गृहं तात ! वचो मे परिपालय ॥ १३८ ॥ सोऽपि द्विजवरः शीघ्र मुत्थायाऽऽकुलमानसः । साष्टाङ्गं प्रणिपत्याथ स्वाञ्जलिं न्यस्य मस्तके ॥ १३९ ॥ प्रार्थयामास धर्मात्मा धर्ममूर्तिं जगत्पतिम् । हे हे नाथ कृपासिन्धो ! भक्तदुःखनिवारक ॥ १४० ॥ किं कर्तव्यविमूढोऽहं दह्यमानः शुगाग्निना । शोकसागरनिर्मग्न उद्धृतोऽस्मि त्वया प्रभो ! ॥ १४१ ॥ परमन्यदिदं याचे तत्पूरय कृपानिधे ! प्रत्यहं वर्धतां नाथ ! भक्तिर्मे तव पादयोः ॥१४२॥ तव भक्ति

विना नाथ जगन्नाथ दयानिधे । क्षणमेकं न तिष्ठानि यथा कुरु तथा प्रभो ॥१४३॥ कृपामूर्ते महादेवि जगन्मात र्महेश्वरि । तवाग्रेऽप्येतदेवाहं प्रार्थये भक्तवत्सले ॥ १४४ ॥ आशीर्वचन मादाय तयो र्देवातिदेवयोः । प्रेमाश्रुपूर्णनयनः प्रणनाम पुनः पुनः ॥ १४५ ॥ सर्वथाऽऽत्रास्य तं दासं प्रत्यहं स्वस्य दर्शनम् । प्रतिज्ञाय महाराजः सश्रीसीतस्तिरोदधे ॥ १४६ ॥ एवंच भावनागम्यो भगवानृषयः सदा । भक्तरक्षाविधानाय सचेष्टः किल वर्तते ॥ १४७ ॥ अनन्यश्रद्धया रामं भजन्तं मानुषं सदा । भजते रामचन्द्रोऽपि कृपासिन्धुः कृपामयः ॥ १४८ ॥ तस्माद्विशुद्धभावेन स्मर्तव्यः स परः पुमान् । तथा च ध्यायतां पुंसां सकला ऋद्धिसिद्धयः ॥ १४९ ॥ जन्ममृत्यू न बाधेते स्मरतः पुरुषं परम् । तस्मात्प्रत्यहमुत्थाय तत्परो वैष्णवो भवेत् ॥ १५० ॥ श्रवणं मननं चापि निदिध्यासनमेवच । दर्शनं स्पर्शनं चैव क्रमेणासञ्जनं तथा ॥ १५१ ॥ धर्मार्थमोक्षलिप्सूनां यतीनां ब्रह्मचारिणाम् । पुरुषार्थप्रदा एते षट् सोपानाः प्रकीर्तिताः ॥ १५२ ॥ एकान्ते च नदीतीरे ह्यथवा शून्यमन्दिरे ।

रामं र. ेवपत्राक्षमेकाकी सर्वदा स्मरेत् ॥ १५३ ॥ विमुक्तिकामा अपि भुक्तिकामा स्तमेव तेऽन-न्यधियो भजन्ति । उपास्य तं चैव परं पुमांसं परात्परं ब्रह्मपदं व्रजन्ति ॥ १५४ ॥



इतिश्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां प्रकीर्णविषयनिरूपणं नाम

षष्ठोऽध्यायः

समाप्तेयं श्रीमद्वाल्मीकिसंहिता.

श्री आदर्श प्रिन्टींग प्रेसमां,
शाह वाडीलाल डाह्याभाई पंडिते छाप्युं;
पांचकुवा नवा दरवाजा—अमदावाद.

श्रीमते रामानन्दायनमः

धार्मिक महानुभाव !

'धर्मस्य तत्त्वं निहितं गुहायाम्' यह जो भगवती श्रुतिका कथन है इसकी सत्यता मानव-सृष्टिमें प्रतिक्षण प्रमाणित हो रही है और प्रलयान्त होती रहेगी। हमारे धार्मिक ग्रन्थ आज विलुप्त-प्राय हो चुके हैं। हमारी धार्मिक मर्यादा हमारे आलस्यसे दूसरोंके हाथकी पतङ्ग हो चुकी है। हम उस कठपुतलीके समान हो चुके हैं जो दूसरोंके चलानेसे चलती है और बैठानेसे बैठती है। हमने अबसे पहले कभी इसलिये प्रयत्न नहीं कियाथा कि हमभी संसारमें सर्वोच्च और साम्प्रदायिक गिने जावें। परन्तु अब हम नये युगमें हैं। सारा संसार जागृत है। हमभी बहुत दिन तक सोये नहीं रह सकते थे। प्रत्येक पदार्थकी सीमा है अतः सोनेकी भी सीमा होनी चाहिये। वह सीमा समाप्त हो गई, अबतो अपने धर्म, कर्म, रूप, मर्यादा सभी पदार्थोंकी गवेषणा करनी है। ऐसा करनेसे हम उसी रेखापर खडे रह जावेंगे जहां रहकर हमने अपनी उन्नतिका मार्ग भुला दिया

है, जहां रहकर हमने अपने ज्ञान–सूर्यको अस्त होते देखाथा, जहांसे हमें 'पन्थाई' की उपाधि मिलीथी और जहां रहकर हमने इस कलङ्कित उपाधिको स्वीकार कर लियाथा। अतः हमारा कर्तव्य है कि हम अपनी सभी बातोंका अन्वेषण करें। अन्वेषणसे निश्चयही हम अपने उन रत्नोंको उपलब्ध करेंगे जिनके विना आज हमारा कोष शून्य है, जिनके विना हम अन्धकारमय जीवन व्यतीत कर रहे हैं, और जिनके विना हम अपनी जगहसे तिलमात्रभी आगे नहीं बढ़ सकते। हमें एक हिन्दी कविके इस वचनको कभी भी नहीं भूलना चाहिये कि "जिन खोजा तिन पाइयां गहरे पानी पैठ।" आज आपने घोर परिश्रम किया, देखिये आपके हाथमें एक ऐसा समुज्ज्वल रत्न आया जिसके चाकचिक्यसे अन्धकार तिरोहित हो गया। अपना स्वरूप झलक गया। स्वरूपावस्थान हो गया। इस महार्घ्य रत्नका नाम है 'श्रीमद्वाल्मीकिसंहिता'।

इस संहिताको मुद्रित और प्रकाशित करनेकेलिये परमार्थ परायण, दर्शन निधि, तार्किकप्रवर, हमारे परममित्र वेदान्तिशिरोमणि पण्डित श्रीरघुवरदासवेदान्तीजी महाराजने प्रतिज्ञा करके मुद्रणकार्य्य आरम्भ कर दिया और उसके संशोधनका दुर्वहकार्य मुझे सौंप दिया। मैंने

यथा शक्ति इसकार्यका सम्पादन किया है । मूल पुस्तकके पत्रे अत्यन्त जीर्ण थे, कितनेही स्थल पर लेखभी अस्पष्ट थे, अतः ऐसे स्थलोंको मैंने खाली ही रहने दिया है । प्राप्त दोनों पुस्तकोंमें जो कुछ पाठान्तर था उसेभी टिप्पणीमें दिखा दिया है ।

महानुभाव ! अशुद्धियोंके संसर्गसे इस ग्रन्थको पृथक् रखनेकेलिये पूर्ण उद्योग करने परभी स्वाभाविक निर्बलताके कारण मुझे सफलता नहीं प्राप्त हुई । कितनेही स्थलोंमें छोटी २ अशुद्धियां और दो एक स्थलोंमें अचिन्त्य बडी २ अशुद्धियां रह गई हैं । यथासम्भव शुद्धा-शुद्धनिदर्शक पत्र लगा दिया है परन्तु; तथापि मानवसुलभ भूलोंके लिये 'हसिष्यन्ति खला-स्तत्र समाधास्यन्ति सज्जनाः' इस वचन पर विश्वास रखकर विराम लेनेके लिये आप सज्जनोंसे आज्ञा लेता हूं ।

अहमदावाद.
पौष शुद. ११ सं० १९७८ वि०

वशंवद,
श्री भगवद्दासब्रह्मचारी.
वेदरत्न, निरुक्तभूषण (अयोध्या.)

## श्रीमते रामानन्दाय नमः

श्रीमन्महानुभाव।

निस्सीमकल्याणगुणैकनिलय भगवान् श्रीरामचन्द्रजीकी निर्व्याज–अनुकम्पासे यह सूचना देते परमानन्द होता है कि 'पुरातत्त्वानुसन्धायिनीसमिति अयोध्या' ने अल्प समयमेंही श्रीरामानन्दसम्प्रदायका वहुत उपकार कर बताया है। यह समिति कुछ कालसे इस चिन्तामें लगी हुईथी कि कोई ऐसा प्रामाणिक ग्रन्थ उपलब्ध हो जिसमें श्रीरामानन्दसम्प्रदायके सिद्धान्तोंका अच्छा वर्णन हो। अनवरत परिश्रमके बाद अन्तमें अहमदाबादमें पण्डित वृन्दावन शर्माजीके यहां नारदपञ्चरात्रान्तर्गत श्रीमद्वाल्मीकिसंहिताकी एक प्रति उपलब्ध हो ही गई। साथ ही दूसरी प्रति पूनेके पणशीकर के. वी. शर्माजीसे भी उपलब्ध हुई। समितिने इस पुस्तकके प्रकाशनका भार तथा सब प्रकारका अधिकार मुझे सौंप दिया। मैंने यह वचार करकि इस परम दुर्लभ ग्रन्थके मुद्रणसे सम्प्रदायकी कुछ सेवा होगी समितिके आदेशको शिरोधार्य्यकर मुद्रणकार्य्यारम्भ किया। इसके मुद्रण-कार्य्यरूप–अम्भोनिधिमें निमग्न मुझे देखकर मेरे माननीय सन्मित्र पुण्यश्लोक, कविवर, निरुक्तभूषण, वेदरत्न पण्डित श्री भगवद्दास ब्रह्मचारीजी महाराजने कर्णधारका कार्य्य किया है अतः उनका पूर्ण उपकार मानता हुआ मैं आशा करता हूं कि धर्म्मप्राण सज्जन इस ग्रन्थ रत्नको अपनाकर पूर्ण लाभ उठावेंगे।

शान्ति कुटीर
उञ्झा–( गुजरात )

विनीत
श्रीरघुवरदासवेदान्ती.

# दो शब्द

मैं प्रायः ६ माससे अहमदावादमें श्रीराजाधिराजमन्दिरमें निवास कर रहा हूं । इस मन्दिरके अधिपति महान्त पण्डित श्री वंशीदासजी शास्त्रीजी महाराज हैं । आप अत्यन्त सरल-प्रकृति, विचारशील और संस्कृत भाषा तथा साम्प्रदायिक-रहस्यके अच्छे ज्ञाता हैं । आपकेही सुखप्रद सुप्रबन्धमें रहकर मैंने 'यतीन्द्रविंशति' (श्री रामानन्द स्तोत्र) 'आश्रम कण्टकोद्धार' (विरक्त वैष्णवाश्रम विचार) और इस 'श्रीमद्वाल्मीकिसंहिताको मुद्रित कराकर आप श्रीवैष्णवोंकी सेवामें उपस्थित करनेका सौभाग्य प्राप्त किया है । अतः मैं श्रीपण्डितजी महाराजका हृदयसे कृतज्ञ हूं ।

राजाधिराज मन्दिर,
अहमदावाद.

भगवद्दास ब्रह्मचारी.

## इस संहिताके मिलनेका पता—

सेठ छोटेलाल लक्ष्मीचंन्द.
बुकसेलर, अयोध्या

महान्त श्री प्रेमदासजी
मोटामन्दिर, पालनपुर
(गुजरात)

# शुद्धाशुद्धनिदर्शनम्

प्रथमाध्याये २५ तमे श्लोके 'श्रृङ्गारं-शृङ्गारं'। २७ तमे श्लोके 'कचिद्दृष्टं–कचिद्दृष्टं'। ५१ तमे श्लोके 'स्वमण्डलं-खमण्डलम्'। द्वितीयाध्याये ३३ तमे श्लोके 'श्री सातां–श्रीसीतां'। तृतीयाध्याये ३६ तमे श्लोके 'मृगानेवं....स एव निर्द....–मृगानेवं.... स दृष्ट्वा निर्द....'। ३७ तमे श्लोके 'भूपति दृष्ट्वा–भूपति दृष्ट्वा'। ४२ तमे श्लोके 'सुखसुप्ताश्च–सुखसुप्ताँश्च'। ५५ तमे 'वचस्विदम्–वचस्त्विदम्'। ६६ तमेश्लोके 'रामन्त्रस्न्तु–राममन्त्रन्तु'। ७८ तमे श्लोके 'पतितं मामरक्षयत्–मग्नं त्वं मामरक्षयः'। ८८ तमे श्लोके 'शुद्धामदायाऽति–शुद्धामादायाऽति'। ९५ तमे श्लोके 'रांवाजं–रांवीजं' चतुर्थाध्याये ३१ तमे श्लोके 'सुबुद्ध यः–सुबुद्धयः'। पञ्चमाध्याये मैथिल्युपनिषदः प्रथमश्लोके 'निरज्जनां–निरञ्जनां'। षष्ठाध्याये २४ तमे श्लोके 'नैष्ठिकश्व–नैष्ठिकश्च'। ४५ तमे श्लोके 'गुरु मित्रं--गुरुर्मित्रं'। ५४ तमे श्लोके 'परमा--परमां'। ८२ तमे श्लोके 'मौद्गनि- मौद्गानि'। ९१ तमे श्लोके 'मौदम्बरं--मौदुम्बरं'। १३३ तमे श्लोके 'श्व--श्च'। चतुर्थपञ्चम षष्ठसप्तमाष्टमपत्रेषु बहिस्सीमं प्र० अ० इत्यस्य स्थाने द्वि० अ० इति, नवमदशमैकादशद्वादशपत्रेषु च बहिस्सीमं प्र० अ० इत्यस्य स्थाने तृ० अ० इति ज्ञेयम्।

# श्रीमद्वाल्मीकिसंहितायाः प्रत्यध्यायं श्लोकसंख्याक्रमेण विषयाः प्रदर्श्यन्ते ।

पञ्चमाध्याये—



षष्ठाध्याये—

श्रीमत रामचन्द्राय नमः ।

# अथ वाल्मीकिसंहिता.

सर्वेषां मूलभूताय रघुनाथाय वेधसे । धनुर्द्धराय रामाय जानकीजानये नमः ॥ १ ॥ आसीत्स्वस्थः समासीनो वाल्मीकि र्मुनिपुङ्गवः । ऋषयो मुनयश्चैव तमुपेत्य तपोधनम् ॥ २ ॥ उपविश्य च ते सर्वे विहितानतयः खलु । साञ्जलि प्रार्थयामासुः शुश्रूषाऽस्माकमस्तियत ॥ ३ ॥ के वेदा विषयाश्चापि के तेषां च तपोधन ! कथमुत्पत्तय स्तेषा मिति विज्ञापय प्रभो ! ॥ ४ ॥

वाल्मीकि रुवाच–

एकदा श्रुतयः सर्वाः समवेताः परस्परम् । चिन्तयामासु रेकान्ते का नो माता पिता च कः ॥ ५ ॥ संसारेऽस्मिन्महासारे प्रतिष्ठा परमास्तिनः । श्रद्दधते च सर्वे नो मानिभिश्च मता वयम् ॥ ६ ॥

परमेतन्न जानीमः का नो माता पिता च कः। कथं कस्मात्कदा जाता वयमस्मिन्महीतले ॥ ७ ॥
यदि न स्यात्कुलं श्रेष्ठं शुद्धश्चेन्नास्मदन्वयः। सन्देहः कोऽपि नास्तीह न स्यात्पूजा कदापि नः ॥ ८ ॥
तथाप्येतत्तु विज्ञेयं कस्माज्जाता जनिस्तु नः। जननीजनकौ क स्तो जन्मभूमिश्च कुत्र नः ॥ ९ ॥
ते धन्याः सर्वमान्यास्ते प्राप्तजन्मफलाहि ते। जीवतः पितरौ येषां सेवन्ते तौ च ये सदा ॥ १० ॥
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। श्रूयते सततं ह्येतन्मानवेषु सुरेषु च ॥ ११ ॥
बहवः क्षत्रिया वीरा जन्मभूमेश्च कारणात्। सङ्गरं समनुप्राप्य प्राणान् हित्वा महीतलात् ॥ १२ ॥
स्वर्गं च प्रापुरत्यर्थं देवैः सम्मानिताश्चते। इन्द्रोऽपि स्वासनं त्यक्त्वा स्वागतं चावदत्पुरा ॥ १३ ॥
पितरौ सेवमानाः प्यनेके स्वः प्रययुः पुरा। अस्माकं विदितं चास्ते सर्वं त्वेतद्विशेषतः ॥ १४ ॥
एवं विज्ञाय यत्नेन मातरं पितरं च नः। सेवनीयावुभौ प्रीत्या ह्येष धर्मः सनातनः ॥ १५ ॥
आत्मनोस्तु सुखं त्यक्त्वा यौ नो दत्तः सुखं परम्। सेवनीया वुभौ प्रीत्या ह्येष धर्मः सनातनः ॥ १६ ॥
गर्भस्थं जीवलोकं यौ पालयतो दयायुतौ। सस्नेहं सेवनीयौ ता वेष धर्मः सनातनः ॥ १७ ॥
खादन्तौ च पिबन्तौ च यौ नो विस्मरतश्च नो। सस्नेहं सेवनीयौ ता वेष धर्मः सनातनः ॥ १८ ॥

शयानावपि यौ नित्यं ध्यायतो नः सदा शिवम्। सादरं सेवनीयौ ता वेष धर्मः सनातनः ॥ १९ ॥
सन्तती भोजयित्वैव भुञ्जाते यौ तु नित्यशः । सेवनीयावुभौ प्रीत्या ह्येष धर्मः सनातनः ॥ २० ॥
स्वयं दुःखं विषह्यापि यतेते च सुखाय नः । सादरं सेवनीयौ ता वेष धर्मः सनातनः ॥ २१ ॥
पितरौ सेवमानाना मन्यांश्चापि गुरूं स्तथा । आयुष्यं वर्द्धते नित्यं श्रूयते ज्ञानिनां मुखात् ॥ २२ ॥
सर्वज्ञानवतां श्रेष्ठो वेदविद्याविशारदः । ब्रह्मेति लोके विख्यात स्ततः प्रष्टव्य एव सः ॥ २३ ॥
इति सञ्चिन्त्य ताः सर्वाः श्रुतयो लोकमातरः । नारीरूपाणि सङ्गृह्य वस्त्राण्याभरणानि च ॥ २४ ॥
शृङ्गारं च समाधाय जगच्छान्तिप्रदायिकाः । अनन्ता रूपसम्पन्नाः प्रययु र्ब्रह्मसन्निधिम् ॥ २५ ॥
लक्ष्मीमपि तिरस्कर्तुं न्यक्कर्तुं रतिगर्वकम्। कोऽयं रूपसमारम्भ श्चिन्ता जाता च तद्धृदि ॥ २६ ॥
नैवं रूपं क्वचिद्दृष्टं न श्रुतं नापि चिन्तितम्। कस्येयं नूतना सृष्टिः कथं जाताऽत्र भूतले ॥ २७ ॥
एवं चिन्तयतस्तस्य ब्रह्मदेवस्य सन्निधौ । श्रुतयः सहसा तत्र प्रापु र्विश्वहिते रताः ॥ २८ ॥
प्रत्युत्थानादिना ब्रह्मा सच्चकार ससम्भ्रमम् । प्रददा वासनं तासा मलश्चक्रुश्च तत्समाः ॥ २९ ॥

यस्मिंश्च समये ताभिः समाक्रान्तं तु तत्पदम्। परमा तोषकरी शान्ति रात्रिर्भूता ऋषीश्वराः! ॥३०॥ वयसः सम्पद स्तासां रूपं लावण्यमद्भुतम्। विषयस्य प्रकोपाय नाभूत्किञ्चिदपि प्रभोः ॥ ३१ ॥ सर्वेषां च मनः शान्त मासी च्छान्तानि खानि च। आस्तिक्यं ज्ञानवीकाशः सम्यगासीद्विधेस्तदा ॥ ३२ ॥ अञ्जलिं मस्तके कृत्वा महातेजा विवेकवान्। ब्रह्मा सुरवर स्तत्र ह्येवं पप्रच्छ विह्वलः ॥३३॥

ब्रह्मोवाच—

का यूयं दिव्यरूपाढ्या वासः क्वास्ति कुलंच किम्? कस्यानन्दविधायिन्यः किमर्थं चागता इह ॥३४॥ इति श्रुत्वा विधेर्वाचं जगन्मङ्गलकारणम्। तासामेका वृहत्तेजा जगाद वचनन्त्विदम् ॥३५॥

श्रुति रुवाचः—

कामरूपधरा नित्या हे ब्रह्मन्! श्रुतयो वयम्। यज्ञोपवीतिनां गेहे प्रायोवासं च विद्धि नः ॥ ३६ ॥ कामक्रोधादिशत्रूणां जेतारो ये महीतले। तेषामेव मनोऽस्माकं वासस्थानं निबोधय ॥ ३७ ॥ ये न सन्तीन्द्रियारामाः कामिनो नैव लोलुपाः। तेषामेव मनोऽस्माकं वासस्थानं निबोधय ॥ ३८ ॥ येषां शुद्धं मनः क्वापि परदारान् न पश्यति।

तेषामेव मनोऽस्माकं वासस्थानं निबोधय ॥ ३९ ॥ सर्वेषां देवपूज्यानां भवानेवास्ति वृद्धराट् । सर्वशास्त्रार्थसम्पन्ना सर्ववस्तुविवेकिनी ॥ सर्वतो गामिनी भद्रा बुद्धिस्ते दूरदर्शिनी ॥ ४० ॥ इति विज्ञाय हे ब्रह्मन् समायाता वयं त्विह । कास्माकं जननी देव कः पितेति विबोधय ॥ ४१ ॥ न ज्ञानमस्ति नः किञ्चिद्विषयेऽस्मिन्महायशः! तस्मा त्त्वदुत्तरे ब्रह्मन्नस्माकं धीर्न गच्छति ॥ ४२ ॥ तासां रूपस्य वैपुल्यान्माधुर्य्याच्चाप्यलौकिकात् । आसीद्विमोहितो ब्रह्मा क्षणं स्वच्छाच्छमानसः ॥ ४३ ॥ तन्नामश्रुतिमात्रेण मोहो दूरं गतस्तथा । निर्धूताऽज्ञानवृत्तेस्तु सर्वं ज्ञानं बभूव ह ॥ ४४ ॥ प्रसन्नवदनो ब्रह्मा प्रोचे ता वचनंत्विदम् ।

ब्रह्मोवाच–

शृणुत प्रहितध्याना देव्यो यूयं वचोमम ॥ ४५ ॥ जगतः पितरौ रामो जानकी वेदविश्रुतौ । सर्वेशौ सर्वगौ सम्यक्सर्वज्ञौ सर्वदौ शिवौ ॥ ४६ ॥ नाशकौ सर्वदुष्टानां प्रणतानां च रक्षकौ । त्रातारौ दीनदासानां सृष्टिसंहारकारिणौ ॥ ४७ ॥ तामेव जानकीं वित्त जननी मात्मनः

१ क. 'त्मनां प'।

पराम् । श्रीरामं पितरं वित्त सत्यं ह्येतद्वचो मम ॥ ४८ ॥ दृष्टिनिक्षेपमात्रेण यो लोकान्त्सृजति प्रभुः । शक्त्या च परया युक्तः स युष्माकं जनिप्रदः ॥ ४९ ॥ गङ्गाद्याः सरितः सर्वा महापाश्चापि सागराः । सूर्य्याचन्द्रमसौ तारा अरण्यान्यश्च पर्वताः ॥ ५० ॥ सप्तद्वीपा महीयं च विस्तृतं च खमण्डलम् । पशवः पक्षिणो नाना कृतयो यस्य सन्तिहि ॥ ५१ ॥ अयं सूर्य्यस्तमोहन्ता यस्य भासा विभाति खे । स एव जानकीजानि र्जन्मदाताऽस्तिवः....॥ ५२ ॥ हिमाद्रिर्मेरुकैलाशौ द्योतयन्ति च यत्कृतिम् । सीतापतिं तमेवाऽत्र प्रभवं जानीत चात्मनाम्[1] ॥ ५३ ॥ इन्द्रादयः सुराः सर्वे सेवन्ते यं सदाऽनघम् । तमेव रघुवंशाग्र्यं पितरं वित्त चात्मनाम् ॥ ५४ ॥ सेवते यत्पदं नित्यं काशीवासी शिवोऽपि सः । साकेतस्थं परं ब्रह्म पितरं वित्त नान्यथा ॥ ५५ ॥ देवदेवोऽपि दासत्वं नित्यं यस्याभिकाङ्क्षति । रक्षकं जनकं चापि वित्त यूयं तमेव ह ॥ ५६ ॥ शचीप्रभृतयः सुर्य्यः सेवन्ते सततं च यम् । आत्मनां[2] जनकं चापि वित्त यूयं तमेव ह ॥ ५७ ॥ नित्या यूयं सुतास्तस्य श्रीरामस्य मम प्रभोः। सीतायाश्च महाराज्ञा विचारयत मान्यथा ॥ ५८ ॥

१ क. ' त्मनः ' । २ ख. ' त्मनः '

सामान्यज्ञानवत्सर्वं पुराऽऽसीन्मानवं जगत्। धर्म्माधर्म्मविवेकोऽपि नासीत्सम्यङ् महीतले ॥ ५९ ॥
किं कर्तव्यमकर्तव्यं मुग्धा आसन्नराः सदा। सृष्टे रादौ विवेकाय कल्याणाय नृणां तदा ॥ ६० ॥
परात्परेण रामेण सीतया सहितेन च। यूयमुत्पादिता देव्योऽनन्ता नित्यविभूतयः ॥ ६१ ॥
यावत्सृष्टि स्थितिर्वोऽत्र भविष्यति न संशयः। धर्मस्रोतांसि यूयं हि प्रथिताः सर्वदा भुवि ॥ ६२ ॥
एवं ब्रह्मवचः श्रुत्वा शान्तात्मानःस्तु ताः समाः। प्रसन्नाः श्रुतयो देव्यस्तदा जग्मुर्यथाऽगतम् ॥६३॥
आगच्छन्त्य स्ततः सर्वा स्ताः पथ्येवं व्यचारयन्। सर्वज्ञानवतां श्रेष्ठो वेदविद्याविशारदः ॥ ६४ ॥
गुरु र्देवगुरुः ख्यातो महातेजा महातपाः। भक्तिमांश्च महाज्ञानी श्रूयते सर्वथा सदा ॥ ६५ ॥
...[1] ....तत्समीप मुपेत्य च। श्रीरामस्य परं तत्वं श्रोतव्यं तन्मुखेन हि ॥ ६६ ॥ एवं
सम्मत्य ताः सर्वा स्तत्समीपं ययुः किल। पूजिताः सुरपूज्येन तमूचु र्वचनं मुदा ॥ ६७ ॥
... ....ज्ञानवच्छ्रेष्ठ रामतत्त्वं निबोधय। गुरु स्तासां वचः श्रुत्वा तत्क्षणं तदबोधयत् ॥ ६८ ॥

---

१ ख. 'था शीघ्रं'।

एवं ताः सकलाः पुनीतहृदयाः श्रुत्वा वचस्तन्मुदा। प्रत्यावृत्य यथासुखं भुवि पुन स्तस्थु र्जगन्मातरः। लोकानां दुरितक्षयाय सततं ह्यद्यापि तास्ताः कथाः। देवानामपि दुर्लभाश्च कथयन्त्यानन्ददा नित्यशः॥ ६९॥

इति श्री पाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां वेदोत्पत्तिनिरूपणं नाम
प्रथमोऽध्यायः।

ऋषय उचुः—

उत्पत्तयः श्रुतीनां तु श्रुतमस्माभिरादरात्। कृतकृत्या स्तु तच्छ्रुत्वा तद्विषयान् विवोधय ॥ १ ॥

वाल्मीकि रुवाच—

त्रैगुण्यविषया वेदा इति शास्त्रविवेचना। तत्र भगवत्कैङ्कर्यं नवधा भक्तय स्तथा॥ सेवापूजाविधानानि वर्णितानि समासतः॥ २॥ राममन्त्रस्य माहात्म्यं सर्वकामप्रदस्य तु। वर्णितं

सविशेषेण यागाद्या अपि वर्णिताः ॥ ३ ॥ वर्णितानि रहस्यानि ज्ञातव्यानि विशेषतः । यच्छ्रुत्वा मूढबुद्धीनां मानसं निर्मलं भवेत् ॥ ४ ॥

ऋषयऊचुः—

नवधा भक्तयः प्रोक्ता यास्तत्र च महामनः ! ताः श्रोतुमभिवाञ्छामः कृपया ब्रूहि नः प्रभो ॥ ५ ॥

वाल्मीकिरुवाच—

शृणुध्वमृषयो यूयं वक्ष्येऽहं सकलाश्च ताः । नश्येद्यच्छ्रुतिमात्रेण पातित्यं ज्ञानिनामपि ॥ ६ ॥
नवधा भक्तयः प्रोक्ताः श्री रामस्य प्रसादिकाः । भक्तै स्ताः सर्वदा सेव्या जगज्जालमुमुक्षुभिः ॥ ७ ॥
श्रवणं रामचन्द्रस्य गुणानां श्रद्धया पुनः । गुणानां कीर्तनं चापि तन्नामस्मरणं तथा ॥ ८ ॥
पादसेवार्चनं नित्यं वन्दनं दास्यमेव च । सखित्वं, श्रद्धया भक्त्या तस्मै[1] चात्मनिवेदनम् ॥ ९ ॥
एताः कुर्वन्सदा भक्तीर्नरः पापात्प्रमुच्यते । गत्वाऽन्ते च प्रभो लोक लभते शाश्वत सुखम् ॥ १० ॥

---

१ ख. 'स्मा आत्म'।

इदानीं कथ्यतेऽस्माभिर्युष्माकं पुरतोऽनघाः । महात्म्यं राममन्त्रस्य श्रूयता मृषयो मुदा ॥ ११ ॥
'रां रामाय नमः' राममन्त्रं यूय मवेत वै । यस्य श्रवणमात्रेग कोटिजन्मकृतान्यपि ॥
पापानि च विनश्यन्ति क्षणेनैव महर्षयः ॥१२॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि गुणान्विताः ।
श्रद्धया परया युक्तास्ते च तस्याधिकारिणः ॥ १३ ॥ राममन्त्रविहीनानां शुद्धकर्मवतामपि ।
विफला हि क्रियाः सर्वा इति वेदेषु कथ्यते ॥ १४ ॥ वृथा धर्मो वृथा कर्म वृथा जीवनमस्ति च ।
राममन्त्रविहीनस्य वेदविद्याविदोऽपि च ॥ १५ ॥ रकारादिमकारान्तं मन्त्रं नित्यं षडक्षरम् ॥
श्रीरामस्य जपन्नित्यं पारं तरति कल्मषात् ॥ १६ ॥ रामतारकमन्त्रोऽयं महापातकनाशनः ॥ १७ ॥
जन्ममृत्युजराव्याधिशोकमोहादिसञ्चयः । नश्यति क्षणमात्रेण श्रद्धया जपतः सकृत् ॥ १८ ॥
राममन्त्रं जपान्नित्यं विधिवत्पापभागपि । भूत्वा निष्कल्मषो याति देहान्ते परमं पदम् ॥ १९ ॥
रामो हि देवता चास्य जानकी चर्षिर्मता । गायत्रीच्छन्द आस्थेयं वीजं रां इति कथ्यते ॥ २० ॥
चक्रं षट्कोणसंयुक्तं भूमौ विन्यस्य तत्र च । ऊर्ध्वे रां इति विन्यस्य वामभागे च तस्य वै ॥ २१ ॥

१ ख. 'सर्वश्रुतिश्रुतस्यच'।

राकारो लिख्यतेऽधस्तान्माकारो दक्षिणेपुनः । ततोऽधश्च यकारोऽपि नकारो वामपार्श्वके ॥ २२ ॥
मःकार श्चक्रमध्ये च, पूर्वस्यां दिशि संविशन् । ब्राह्म एव मुहूर्ते तु श्रद्धाभक्तिसमन्वितः ॥ २३ ॥
धूपगन्धेन सम्पूज्य दीपं प्रज्वाल्य सर्पिषः । साष्टाङ्गं प्रणिपत्यैव पुनस्तत्रोपविश्य च ॥ २४ ॥
उत्तराभिमुखो भूत्वा श्रीरामं हृदये स्मरन् । चक्रस्य वामभागे तु धनुरालिख्य तत्परम् ॥ २५ ॥
दक्षिणे वाणयुग्मस्य विन्यस्याकृति मुत्तमाम् । पुनस्तथैव धूपाद्यै रर्चां कृत्वा विधानतः ॥ २६ ॥
[1]लक्षत्रयं समाऽऽसीनो जपं स्तारक मुत्तमम् । लभते परमां मेधां वीतपापपरम्परः ॥ २७ ॥
यां मेधां विबुधा नित्यं पितरश्चाप्युपासते । तया युक्तः क्षणेनैव देवतुल्यो भवेन्नरः ॥ २८ ॥
मोक्षाभिलाषिणो मोक्षं कामं कामाभिलाषिणः । अर्थमर्थिन एवात्र प्राप्नुवन्ति न संशयः ॥ २९ ॥

ऋषय ऊचुः—

पूर्वंतु राममन्त्रोऽय मासीत्स्वर्[2]ग्येषु केवलम् । पृथिव्यां कथमायात स्तन्नो ब्रूहि दयानिधे ॥ ३० ॥

१ क. ' एकासनो लक्षत्रयं ' । २ क. ' स्वर्गे हि के ' ।

## वाल्मीकि रुवाच—

इदं तु परमं तत्त्वं देवाना मप्यगोचरम्। पृष्टं युष्माभि रनघं कथ्यते शृणुतर्षयः ॥ ३१ ॥
भगवान् रामचन्द्रो वै परं ब्रह्म श्रुतिश्रुतः। दयालुः शरणं नित्यं दासानां दीनचेतसाम् ॥ ३२ ॥
इमां सृष्टिं समुत्पाद्य जीवानां हितकाम्यया। आद्यां शक्तिं महादेवीं श्रीसीतां जनकात्मजाम् ॥३३॥
तारकं मन्त्रराजं तु श्रावयामास ईश्वरः। जानकी तु जगन्माता हनूमन्तं गुणाकरम् ॥ ३४ ॥
श्रावयामास नूनं स ब्रह्माणं सुधियां वरम्। तस्माल्लेभे वसिष्ठर्षिः क्रमादस्मादवातरत् ॥
भूमौ हि राममन्त्रोऽयं योगिनां सुखदः शिवः ॥ ३५ ॥ एवं क्रमं समादाय मन्त्रराजपरम्परा।
भूमौ प्रचलिता नित्या सर्वलोकसुखप्रदा ॥ ३६ ॥

## ऋषय ऊचुः—

संशयो नः समुत्पन्नः परमः परतत्त्ववित्! त्वद्वचांसि निशम्यैव समाधेहि सपद्यलम् ॥ ३७ ॥



१ ख. 'शिष्ठ'।

जानक्याः शिष्यतां यातो हनूमान्नाम वानरः । इत्यवोचद्भवान् यत्तु तत्र नः कौतुकं परम् ॥३८॥
त्रेतायां स बभूवेति सर्वतः श्रूयते किल । सर्गादौ च कथं शिष्यो जानक्याः सम्बभूव सः ॥३९॥

वाल्मीकि रुवाच–

शृणुध्वमृषयो यूयमुचितः संशयोऽस्ति वः । परं किंन विजानीथ महाशम्भुः स पावनिः ॥ ४० ॥
नित्यसत्त्वविभूतिस्थो राघवस्य परं प्रियः । जानकीशोकसंहर्ता स्वामिभक्तः स्वभावतः ॥ ४१ ॥
तच्छ्रुत्वा छिन्नसन्देहाः सर्वे ते हृष्टचेतसः । साञ्जलि प्राहु रेतानि शृणुष्व वचनानि नः ॥ ४२ ॥

ऋषय ऊचुः–

विशिष्टाद्वैतसिद्धान्ते तत्त्वत्रय मितीरितम् । तच्छ्रोतुमभिवाञ्छामः कृपया ब्रूहि नः प्रभो ॥ ४३ ॥

वाल्मीकिरुवाच–

शृणुध्वं मुनयः सर्वे कथयामि समीहितम् ॥ ४४ ॥ मुमुक्षो श्चेतनस्यैव तस्यं ज्ञानमपेक्ष्यते ।

१ क, ' त्वज्ञा ' ।

चिदचिदीश्वर श्चैतत्तत्त्वत्रय मितीरितम् ॥ ४५ ॥ परीक्ष्य लोकानित्यादिश्रुत्युक्तेन क्रमेण च ।
मुमुक्षा जायते पूर्वं तत्त्वज्ञानाच्च सर्वथा ॥ ४६ ॥ आत्मा चित्पदसङ्ग्राह्यो ज्ञानाश्रय इतीरणा ।
तस्य रूपमिदं ज्ञेयं वक्ष्यमाण मनुत्तमम् ॥ ४७ ॥ देहेन्द्रियमनःप्राणबुद्धिभ्यश्च विलक्षणम् ।
अजडं नित्य मव्यक्तं निर्विकारं निरिन्द्रियम् ॥४८॥ नियाम्यं धार्य्यमीशस्य शेषं तस्य च शेषिणः।
अणु चानन्दरूपं च ज्ञेयं रूपं चिदात्मनः ॥ ४९ ॥ दाहे तु पातकाभावान्न देह श्चात्मसंज्ञकः ।
इन्द्रियाणामचैतन्यान्नतान्यपि स चेतनः ॥ ५० ॥ अनित्यत्वादनेकत्वात्तेषां नात्मत्वमीरितम् ।
यदि चक्षुर्भवेदात्मा नान्धो रूपं स्मरेत्कचित् ॥५१॥ श्रोत्रस्य यदि चात्मत्वं[2] स्वीकृतं स्यान्महर्षयः ।
शब्दस्मृतिः पुनश्चात्र वाध्या स्यात्सर्वथाऽनघाः ॥५२॥ स्थूलोऽहमिति संवादो गुणीभूतोहि निश्चितः।
तस्माद्देहस्य चात्मत्वं न स्यात्सिद्धं कदापि तु ॥५३॥ अन्याधीनप्रका[3]शस्तु न स्याद्यश्चं[4] महर्षयः ।
अजडं तं विजानीथ ह्येषा शास्त्रीयकल्पना ॥ ५४ ॥ बद्धा मुक्ताश्च नित्याश्च त्रिधाऽऽत्मानः समीरिताः

१ क. ' चिच्चाचिच्चेश्वर श्चैवं तत्त्व ' । २ ख. ' वाऽऽत्मं । ३ क. ' नः प्र ' । ४ ख. ' स्यम ' ।

॥५५॥ ब्रह्मादिकीटपर्यन्ता देवदानवमानवाः । तिर्यञ्चः स्थावराश्चापि बद्धाः संसारिणो मताः ॥५६॥
ते चापि द्विविधा एके शास्त्राधीनत्व मागताः। परे चोच्छृङ्खला ज्ञेयाः शास्त्रधर्मपरिच्युताः॥ ५७ ॥
शास्त्राधीनाश्च विज्ञेया स्तत्त्वस्य प्रबुभुत्सवः । बुभुक्षुत्वमुमुक्षुत्वभेदेन द्विविधा हि ते ॥ ५८ ॥
बुभुक्षवो द्विधा प्रोक्ताः ... .... ...। अर्थकामपरा एके ततो धर्मपराः परे ॥ ५९ ॥
ये च धर्मपरा स्तेऽपि द्विविधाः सन्ति जन्मिनः। देवान्तरेषु संलग्नाः श्रीरामचरणेषु च ॥ ६० ॥
मुमुक्षवो द्विधा ज्ञेयाः कैवल्या मोक्षमार्गिणः । शृणुध्वमृषयो वेदे मोक्षकामा द्विधा मताः ॥ ६१ ॥
भक्ता श्चापि प्रपन्नाश्च, भक्ताश्चापि द्विधा मताः । साध्यसाधनभेदेन भक्तेर्द्वैविध्यकारणात् ॥ ६२ ॥
प्रपन्नोऽपि द्विधा ज्ञेयो मोक्षेच्छुश्च त्रिवर्गवान् । एकान्ती परमैकान्ती दृप्त आर्तश्च विश्रुताः ॥
भेदाश्च बहवः सन्ति बद्धानां तु महर्षयः। ॥६३॥ मुक्ता निवृत्तसंसारा उच्यन्ते वेदवेदिभिः ॥ ६४ ॥
सूर्यमण्डलमाभिद्य सूर्यलोक मवाप्य च । विरजां सम्प्रतीर्याऽथ वैकुण्ठं सम्प्रविश्य च ॥ ६५ ॥
तत्रत्यान् हनुमदादीन् साष्टाङ्गं प्रणिपत्य च । श्रद्धया परया युक्ता आचार्य्यानितराँ स्तथा ॥६६॥
भगवन्तं रामचन्द्रं धनुर्वाणविभूषितम् । श्रियः श्रिया च जानक्या कमलेच विराजितम् ॥ ६७ ॥

दिव्यासनसमासीनं दिव्यभूषणभूषितम्। ब्रुवाणा नाथ नाथेति प्रणम्य जगदीश्वरम् ॥ ६८ ॥ स्वाङ्के श्रीरामचन्द्रेण करुणावरुणालये। स्थापिताश्च महाभागा स्तेनैव च कटाक्षिताः ॥ ब्रह्मानुभवकर्तारो मुक्ता उच्यन्त आस्तिकैः ॥६९॥ संसार मनवाप्तास्तु नित्या हनुमदादयः॥ ७० ॥ ज्ञानेनैव विहीनं यद्बुध्याचित्तत्त्वं निगद्यते। शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्येतिभेदतः ॥ त्रिविधं प्रोक्तमित्यादि ज्ञेयं सर्वं मनीषिभिः ॥ ७१ ॥ ईश्वरः सर्वभूताना मादिकारण मुच्यते। सर्वज्ञो ज्ञानशक्त्यादिकल्याणगुणभूषितः ॥ ७२ ॥ धर्म्मार्थकाममोक्षाणां प्रदाता रघुनन्दनः। दिव्य-विग्रहसंयुक्तोऽनन्तानन्दो जगत्पतिः ॥ ७३ ॥ यद्यप्यार्तिहरो रामो ह्यन्तर्यामी महाप्रभुः। तथाप्यात्मकृतैः कार्य्यै र्न कदापि स बध्यते ॥ ७४ ॥ यथा बाल्याद्यवस्थाभि र्न जीवो दूष्यते क्वचित्। तथाऽन्तश्चरमाणोऽपि न भवेद्दूषितो हरिः ॥७५॥ परव्यूहादिभेदेन विज्ञेयः सच पञ्चधा ॥ ७६ ॥ बहुभिर्द्वारपालैश्च कोट्टपालैश्च संयुतः। महामणिसमाकीर्णे मण्डपे च विराजितः ॥ ७७ ॥ शोभया परया युक्तः किरीटमुकुटादिभिः। महाराज्ञ्या च जानक्या भूनीलाभ्यां च सेवितः ॥ 'परो' हि भगवान् रामः परे लोके विराजितः ॥ ७८ ॥ सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्ध इति भेदतः।

दिव्यासनसमासीनं दिव्यभूषणभूषितम् । ब्रुवाणा नाथ नाथेति प्रणम्य जगदीश्वरम् ॥ ६८ ॥ स्वाङ्के श्रीरामचन्द्रेण करुणावरुणालये । स्थापिताश्च महाभागा स्तेनैव च कटाक्षिताः ॥ ब्रह्मानुभवकर्तारो मुक्ता उच्यन्त आस्तिकैः ॥६९॥ संसार मनवाप्तास्तु नित्या हनुमदादयः॥ ७० ॥ ज्ञानेनैव विहीनं यद्धयचित्तत्त्वं निगद्यते । शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्योतिभेदतः ॥ त्रिविधं प्रोक्तमित्यादि ज्ञेयं सर्वं मनीषिभिः ॥ ७१ ॥ ईश्वरः सर्वभूताना मादिकारण मुच्यते । सर्वज्ञो ज्ञानशक्त्यादिकल्याणगुणभूषितः ॥ ७२ ॥ धर्म्मार्थकाममोक्षाणां प्रदाता रघुनन्दनः । दिव्य-विग्रहसंयुक्तोऽनन्तानन्दो जगत्पतिः ॥ ७३ ॥ यद्यप्यार्तिहरो रामो ह्यन्तर्यामी महाप्रभुः । तथा प्यात्मकृतैः कार्य्यै र्न कदापि स बध्यते ॥ ७४ ॥ यथा वाल्याद्यवस्थाभि र्न जीवो दूष्यते क्वचित् । तथाऽन्तश्चरमाणोऽपि न भवेद्दूषितो हरिः ॥७५॥ परव्यूहादिभेदेन विज्ञेयः सच पञ्चधा ॥ ७६ ॥ बहुभिर्द्वारपालैश्च कोष्टपालैश्च संयुतः । महामणिसमाकीर्णे मण्डपे च विराजितः ॥ ७७ ॥ शोभया परया युक्तः किरीटमुकुटादिभिः । महाराज्ञ्या च जानक्या भूनीलाभ्यां च सेवितः ॥ 'परो' हि भगवान् रामः परे लोके विराजितः ॥ ७८ ॥ सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्ध इति भेदतः ।

विज्ञेयश्च त्रिधा 'व्यूहो' जगत्सृष्ट्यादिकारकः ॥७९॥ पूर्णो ज्ञानबलाभ्यां च 'सङ्कर्षण' इति स्मृतः।
वीर्य्यैश्वर्य्ययुत स्तत्र 'प्रद्युम्न' इति कथ्यते ॥ शक्तितेजोविशिष्टस्तु 'ह्यनुरुद्ध' इतीरितः ॥ ८० ॥
तत्तत्साजात्यरूपेण ह्याविर्भावः परस्य वै। 'विभवः' सच विज्ञेयो मुख्यो गौणश्च स द्विधा ॥
उपास्यः पुरुषै मुख्यो नच गौणः कदाचन ॥ ८१ ॥ सर्वत्र सर्वदा यस्तु जीवाँस्त्यक्तुं नच क्षमः।
'अन्तर्यामी' स विज्ञयो जीवदोषै रदूषितः ॥ ८२ ॥ देशकालादिनियमै रहितः स महाप्रभुः।
धातुपाषाणकाष्ठादिकृतविग्रहमाश्रितः ॥ ८३ ॥ श्रीरामः स परं ब्रह्म जानक्या सहितः प्रभुः।
'अर्चावतारो' विज्ञेयः कृपाशीलो गुणाम्बुधिः ॥ ८४ ॥ एवं पञ्च प्रकारेण ह्येकोऽपि स महाप्रभुः।
विभक्तो भगवान् रामः सर्वलोकैकरक्षकः ॥ ८५ ॥ सेवितः परया भक्तया सन्तुष्टः स हरिः सदा।
स्वाश्रितेभ्यश्च दासेभ्यः सायुज्यं सम्प्रयच्छति ॥ ८६ ॥

इति श्री पाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां विशिष्टाद्वैतसिद्धान्तनिरूपणं नाम

द्वितीयोऽध्यायः।

ऋषय उचुः—

राममन्त्रस्य माहात्म्यं कथितं भवता पुरा। तथापि चाधिकं श्रोतु मीहा नस्तु प्रजायते ॥ १ ॥
भगवँस्तस्मात्कृपां कृत्वा दीनेष्वस्मासु सुव्रत। कथयस्व कथां काश्चिद्येनाऽस्माकं सुखं[1] भवेत् ॥ २ ॥
राम एवास्ति सर्वेषा मस्माकं जीवनं परम्। रामे च योगिनः सर्वे रमन्ते मोक्षकाङ्क्षया ॥ ३ ॥
त्रयाणामपि लोकानां पाता धाता च सर्वथा[2]। संहर्ता वापि श्रीराम उच्यते सकलैर्बुधैः ॥ ४ ॥
धर्म्मार्थकाममोक्षाणां प्रदाता रघुनायकः। श्रूयते सततं वेदे जानकीजानि रीश्वरः ॥ ५ ॥
सुराणां च परित्राता निहन्ता रक्षसां प्रभुः। सर्वशक्तिसमायुक्तो रघुनायक ईश्वरः ॥ ६ ॥
तस्मात्त्वं करुणासिन्धो ! राम भक्तिपरायण ! राममन्त्रस्य महात्म्यं याथार्थ्येन वदस्व नः ॥ ७ ॥

वाल्मीकि रुवाच—

ऋषयः ! श्रूयतामद्य सर्वपापविनाशनम्। राममन्त्रस्य माहात्म्यं देवानामप्यगोचरम् ॥ ८ ॥

१ ख. ‘ रति भ ’। २ क. ‘ वेदा ’।

लक्षत्रयं समाधिस्थो राममन्त्रं जपन् सदा। अपुत्रो लभते पुत्रं सर्वशत्रुविकर्षणम् ॥ ९ ॥
मोक्षस्तु नियत स्तस्य वाक्सिद्धिश्च प्रजायते। तेजसा सञ्ज्वलन्नेव नित्यमित्थं प्रतीयते ॥ १० ॥
पुरा कश्चिन्महापुण्यो वत्सलो नाम भूपतिः। तेन मन्त्रस्य माहात्म्य मनुभूतं यथा, तथा ॥ ११ ॥
कथ्यते श्रूयतां सम्यक् सावधानेन चेतसा। तच्छ्रवणेन युष्माकं सुसिद्धं स्यान्मनीषितम् ॥ १२ ॥
एकदा वत्सलो राजा सर्वभूतहिते रतः। कार्तिके मासि सश्चिन्वन्नेकादश्यां व्रतं ध्रुवम् ॥ १३ ॥
प्रथमे प्रहरे राजा दिनस्य, विदुषां गणैः। यज्ञभूमौ यजन्देवानासीत्तिष्ठन्महामनाः ॥ १४ ॥
तस्मिन् काले महाक्रोधो विप्रः कश्चित्समाययौ। घर्षन्दन्ताँश्च रक्ताक्षः कोपेन स्फुरिताधरः ॥ १५ ॥
यज्ञभूमिं स सम्प्राप द्वारपालैरवारितः। तत्र तं भूपतिं दृष्ट्वा क्रोशयामास स द्विजः ॥ १६ ॥
तव राज्ये महीपाल ! ब्रह्मज्ञा वेदपारगाः। कोटयो ब्राह्मणा नित्यं संवसन्ति यजन्ति च ॥ १७ ॥
वीक्षस्व, यजमानाना मस्माकं शान्तिशालिनाम्। केनापि रक्षसा नूनं यज्ञः सम्प्रत्युपद्रुतः॥ १८ ॥
निश्चिन्तेन त्वया राजन् साध्यते स्वार्थ एवहि। चल, रक्ष महायागानस्माकं राक्षसाच्छुभान्॥१९॥

अन्यथा ते कुलं सर्वं दहेयं शापवह्निना । सत्यं तेऽहं वदाम्येतत् कर्तव्यो नात्र संशयः ॥ २० ॥
श्रुत्वेदं विप्रवाक्यं स तस्मिन्नेव क्षणे नृपः । धनुर्बाणौ समादाय वनं प्रतिययौ मुदा ॥ २१ ॥
यत्रैव यजमानास्ते विप्रा आसन्नुपद्रुताः । तत्रैव स समागत्य राक्षसं च तथाविधम् ॥ २२ ॥
अवलोक्य महावीरः क्रोधसंव्याप्तमानसः । एकेनैव च बाणेन निजघान स राक्षसम् ॥ २३ ॥
प्रसन्नै र्ब्राह्मणैः सर्वै राज्ञसौ नृपसत्तमः । राजधानीं समागच्छन् हृदये स व्यचीचरत् ॥ २४ ॥
इतः समीपे देशे हि कन्दलं नाम जङ्गलम् । विद्यते, यत्र विद्यन्ते बहवः सुन्दरा मृगाः ॥ २५ ॥
हत्वा कतिपयाँ स्ताँस्तु समादाय ततःशनैः । राजधानीं च गच्छामि सर्वसौख्यसमाकुलम् ॥ २६ ॥
एतद्विचार्य्य राजा स प्रययौ कन्दलं ततः । निर्भयं यत्र बहवो विचरन्तिस्म ते मृगाः ॥ २७ ॥
प्राप तत्राऽचिरेणैव भूमिपालो महाबलः । पश्यँश्च जाङ्गलीं शोभां मृगव्यूहं व्यलोकयत् ॥ २८ ॥
क्रीडन्तः केचनाऽऽसँस्तु खादन्तः केचनासत । निर्मलापे तटाकेऽपः पिबन्तः केचनासत ॥ २९ ॥



१ क- ' धक्ष्येऽहंते कुलं सर्व मन्यथा शापवह्निना ' ।

मृगबालान्समादाय धापयन्त्यो मृगस्त्रियः। उपविष्टाश्च तत्राऽऽसन् पादपाना मधस्तले ॥ ३० ॥
केचिद्बालमृगास्तत्र वृक्षमूले समन्ततः। क्रीडान्तिस्म सुखेनैव कुर्वन्तः शृङ्गघर्षणम् ॥ ३१ ॥
केचिच्चापि मिथस्तत्र प्रेम्णा बालस्वभावतः। युध्यन्तेस्म चिरेणव शृङ्गाशृङ्गि सुखाकरम् ॥ ३२॥
धनुष्पाणिं विलोक्यापि ध्यायान्त मवनीपतिम्। अव्याकुलाः स्थिता आसँस्तत्रसुमनसाऽपिन॥३३॥[1]
पूर्वजन्मकृतेनैव केनचित्पापकर्मणा। विकृतातस्य वै बुद्धि र्धार्म्मिकस्यापि भूपतेः ॥ ३४ ॥
दंशानपि वरायितुं यो न धर्मभिया मतिम्। कदाचिदपि सुप्तोऽपि कृतवान् दीनरक्षकः॥ ३५ ॥
मृगानेवं निषण्णान् स एव निर्दयतां गतः। धनुषि स्थापयामास तत्राऽऽशु विशिखान्नृपः ॥ ३६ ॥
मृगमेकं निहत्यैव व्रजतः पथि तस्य वै। गज एको महारत्नै र्वेष्टितो दृष्टि माययौ ॥ ३७ ॥
तमेवं भूपति दृष्ट्वा स्वायत्तीकृत्य विद्यया। आरुरोह च तत्पृष्ठे मृगं चाऽस्थापयत्ततः ॥ ३८ ॥
सुखोपविष्ट मात्मानं जानातिस्म यदा नृपः। महत्कौतूहलं जातं तदा तच्च निशम्यताम् ॥ ३९ ॥

---

१ ख. ' मनसाऽपिन तत्रसुः।

त्रितालदघ्न एवाऽभूत्सहसा स गजस्तदा। राजा तत्पृष्ठ मारूढो विभीतिं जग्मिवान् पराम् ॥ ४० ॥
स करीन्द्र स्तदा भूप मुक्तवानेवमुच्चकैः। राजंस्त्वमतिमूर्खोऽसि निष्करुणोऽसि पापकृत् ॥ ४१ ॥
सुखसुप्ताश्च विश्वस्तान् वञ्चयित्वा मृगानिमान्। एकं तेषु च संवध्य कुकृत्यं कृतवान्नृप ॥ ४२ ॥
यद्दुष्कर्म कृतं राजँस्त्वया धर्मविघातिना। तत्फलं भुज्यतां सद्यः पतन् प्राणानितो जहि ॥ ४३ ॥
राज्यं च तव नष्टं स्यादपुत्रस्य कुकर्मणः। कृमियोनिं समापद्य त्वं खिद्यस्व शतं समाः ॥ ४४ ॥
राजा तद्वचनं श्रुत्वा ह्येवमन्तर्भिदाकरम्। पश्चात्तताप मूढात्मा दुःखसंविग्नमानसः ॥ ४५ ॥
अश्रूणि पातयन् राजा विलपञ्छोकविह्वलः। अञ्जलिं शिरसि न्यस्य प्रोचे विगतचेतनः ॥ ४६ ॥
अकर्तव्यं कृतं कर्म मयाऽवश्यं तु पापिना। तेन मह्यं महाभाग क्रुध्यसे त्वं भृशं गज! ॥ ४७ ॥
किन्तु कस्त्वमिति ज्ञातुं समीहा जायते मम। विज्ञापयस्व तन्मह्यं नूनं त्वं धर्मकोविद! ॥ ४८ ॥
हे देव! हे विपिन नायक! नागराज! हे सत्त्वनाथ! गजराज! विशालकाय!। तुभ्यं नमोऽस्तु भगवन्नतिदिव्यरूप! देवोऽसिवा सुरगजोऽस्यथ योऽसि सोऽसि ॥ ४९ ॥ सत्यं कृतं पतितपावन! पापमद्य दुर्बुद्धिना तु मयका विदुषां वरिष्ठ! हा हा भवेत्कथमये मम नाथ! शुद्धिर्हे दीर्घशुण्ड!

गजराज ! वनाधिराज ! ॥ ५० ॥ आजन्मनो नहि मयाऽऽचरितं गजेन्द्र ! पापं कदापि सुरसेवन-तत्परेण । तस्मात्क्षमस्व गजनायक पापमेकमज्ञानगर्तपतितस्य दुरात्मनो मे ॥ ५१ ॥ मातः ! पित स्तव सुतोऽद्य विपद्यतेऽद्य निस्सन्ततिस्तु भविता तव वंश एषः । शुष्मभ्य मद्य वद को जगतीतलेऽस्मिन्निर्वापं........दास्यति योग्यकाले ॥ ५२ ॥ हाराम ! हा जननि जानकि रक्ष शीघ्रं त्रायध्व मद्य नितरां कुलदेवता ! मे । मत्पापकर्मफलतोऽपरवंश्यकीर्तिं. . . . . .प्रलयं व्रजन्तीम् ॥ ५३ ॥ निपपात पृथिव्यां स विलपन्नित्थ माकुलः । निश्चेतनोऽपि सञ्जातः क्षणं तु तदनन्तरम् ॥ ५४ ॥ लघुरूपधरो हस्ती ह्युपतस्थौ समीपतः । शुण्डेनोत्थाप्य तं भूपं व्याजहार वचास्विदम् ॥ ५५ ॥ राजन्नुतिष्ठ बुध्यस्वं श्रृणु[1] चेदं वचो मम । यत्त्वया ज्ञानहीनेन पूर्वकर्मविपाकतः ॥ पाप-माचरितं तस्मात्तव क्षेमो विनङ्क्ष्यति ॥ ५६ ॥ शापो यस्तु मयादत्तो न स मिथ्या भविष्यति । किन्त्वेकेन प्रयत्नेन क्षीणशक्ति र्भविष्यति ॥५७॥ यदि स्यात्प्राणहानिस्ते विकलाःस्युः प्रजास्तव ।

१ ख. पुस्तके नास्त्येष श्लोकः ।

नैकोऽप्यस्तीदृशो यस्तु रक्षेत्सर्वाः प्रजाः किल ॥ ५८ ॥ सर्वा एव प्रजा अद्य त्वां विना पृथिवीपते ! उच्छृङ्खलत्वमेत्याऽत्र प्राप्नुयु धर्महीनताम् ॥ ५९ ॥ कुलस्त्रियो विनष्टाःस्युः कौलधर्मात्परिच्युताः। सङ्कराणांच संवृद्धि र्भवेन्नूनं ततः परम् ॥ ६० ॥ तस्मान्नाशयितुं शापं मया दत्तं महीपते ! उपायः सरलोऽस्माभिः कथ्यते स निशम्यताम् ॥ ६१ ॥ राममन्त्रस्य माहात्म्यं सर्वपापहरस्य च। गीयते सर्वशास्त्रेषु वेदेषु च तथैव च ॥ ६२ ॥ मोक्षार्थी मोक्ष मागच्छेत्पुत्रार्थी पुत्रमाप्नुयात्। विद्यार्थी प्राप्नुयाद्विद्यां धनार्थी प्राप्नुयाद्धनम् ॥ ६३ ॥ धर्मार्थकाममोक्षाणां नास्ति कोऽपि च तादृशः। यं च नाराधितो दद्याद्राममन्त्रः प्रतापवान् ॥ ६४ ॥ ब्रह्महत्या सुरापानं कनकाहरणं तथा। सङ्गमो गुरुपत्न्या च महापातक मुच्यते ॥ ६५ ॥ महापातकनाशोऽपि मानवानां क्षणेनच। जपतो राममन्त्रस्न्तु भवतीह न संशयः ॥ ६६ ॥ अज्ञानेन कृतं कर्म नश्यत्यल्पप्रयत्नतः। कृतवानसि पापं त्वमज्ञानेनैव भूपते ! ॥ ६७ ॥ अज्ञानेन कृतं कर्म नच पापाय कल्पते। यत्त्वं तथापि शप्तोऽसि क्रोधयुक्तेन वै मया। श्रूयतां पृथिवीपाल तस्य हेतुं ब्रवीमिते ॥ ६८ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्र एव तथैव च। वर्णा एते हि चत्वारः कथिताः शास्त्रपारगैः ॥ ६९ ॥ सर्वेष्वेव च वर्णेषु

ब्राह्मणः श्रेष्ठतां गतः। सर्वे तेन नियम्याः स्यु रन्ये वर्णास्त्रयः खलु ॥ ७० ॥ रक्षको भक्षक श्चेत्स्यात्कथं धर्मस्थिति र्भवेत् । तस्मादल्पेऽपराधेऽपि दण्डनीयो महान् सदा ॥ येन न स्यात्पुनस्तेन पापकर्म कृतं क्वचित् ॥ ७१ ॥ क्षत्रियः सर्ववर्णानां धर्मतो रक्षकः स्मृतः । यः क्षतात्त्रायते सर्वान् क्षत्रियः स हि कथ्यते ॥७२॥ स्वाधिकारात्प्रमत्तश्चेद्भवेद्राजन्यकः क्वचित् । देवेन ब्राह्मणेनाऽपि दण्डनीयः स तत्क्षणम् ॥ ७३ ॥ अपराधविहीनोयं मृगो राजँस्त्वया हतः । ततः शप्तोऽसि भूपाल ! धर्मं पालयता मया ॥७४॥ विधिना चेत्त्वयाऽऽमासं राममन्त्रस्य नित्यशः। जपः स्याच्चेत्कृतो भूप वारं दशसहस्रकम् ॥ ७५ ॥ शापात्प्रमुच्य भूपाल शुद्धां बुद्धिं समेत्य च । धर्मेण स्वप्रजा रक्षञ्जीवसे शरदः शतम् ॥ ७६ ॥ एवं श्रुत्वा स धर्मात्मा भूपतिर्निश्चलव्रतः । प्रार्थयामास साष्टाङ्गं प्रणिपत्य महीतले ॥ ७७ ॥

राजोवाच—

महती ते दया देव यत्त्वया पापनाशनम् । प्रतिज्ञाय महादुःखे पतितं मामरक्षयत् ॥ ७८ ॥

नमस्ते देवराजाय नमस्ते शोकहारिणे ! नमस्ते धर्मरूपाय नमस्ते गजरूपिणे ॥ ७९ ॥
नमस्ते सर्वगायास्तु नमस्ते बुद्धिशालिने । नमस्ते विश्वरूपाय नमस्ते शक्तिशालिने ॥ ८० ॥
भगवञ् श्रूयतामेषा प्रार्थना कृपयात्वया । समीहा जायते श्रोतुं साकल्येनैव तं विधिम् ॥ ८१ ॥
येनैव विधिना मन्त्र ञ्जपञ्छापात्तव प्रभो । मुक्तः स्यां, कथ्यतां सर्वः सप्रपञ्चो विधिः स च॥८२॥

गज उवाच—

राजञ्लुब्धमना भूत्वा श्रूयतां वचनं मम । यस्मात्ते शापमोक्षः स्यात्तं विधिं ते दिशाम्यहम् ॥८३॥
गङ्गातीरं समासाद्य तत्रैवाहश्चतुष्टयम् । निर्जलेन निरन्नेन संस्थातव्यं त्वया नृप ॥ ८४ ॥
दर्शनं स्पर्शनं सर्व मन्येषां परिवर्ज्य च । केवलं रामरामेति मनसा सञ्जपन् नृप ॥ ८५ ॥
चतुरो दिवसानेतान्नय त्वं वाचि संयतः । प्रसन्नवदनो भूत्वा मूकवच्च समाचरन् ॥ ८६ ॥
पञ्चमे दिवसे प्राप्ते मुहूर्ते ब्रह्मणः शुभे । स्नात्वा भूप शुचि र्भूत्वा परिधाय सुवाससी ॥ ८७ ॥
गङ्गाया मृत्तिकां शुद्धा मदायाऽतिसुखावहाम् । एकां च वेदिकां कुर्य्या ह्रस्वां कोणत्रयीयुताम्॥८८॥
प्रत्येकं तु भुजस्तस्या हस्तत्रयप्रमाणवान् । सरलो म्रक्षणः कार्य्यो दर्शनीयो विशेषतः ॥ ८९ ॥

पूर्वाभिमुखं[1] आस्थाय तस्या मध्ये प्रयत्नतः । कुण्डमेकं निखातव्यं वितास्तिपरिमाणवत् ॥ ९० ॥ कुण्डस्य दक्षिणे भागे पूर्वातः पश्चिमां प्रति। रेखां च सरलां कुर्या स्तत्र विन्दून् समालिखेः ॥९१॥ प्रतीच्यास्तु समारभ्य पूर्वां प्रति तथोत्तरे । कृत्वा सुसरलां रेखां रापदानि ि‍खे र्बहु ॥ ९२ ॥ यावन्ति राक्षराणि स्यु स्तावन्तो विन्दवः स्मृताः ॥९३॥ मध्ये तिलान् समाकीर्य्य कृष्णाल्लुब्धान्समीक्षितान् । कुर्या यवानामाक्षेपं तेषामुपरि सर्वतः ॥ ९४ ॥ वहि श्चोपरिभागे तु रांबीजं च समालिखेः। उत्तरे राक्षरं स्थाप्यं दक्षिणे मेति स्पष्टतः॥ पश्चिमे केवलं शून्यं सावकाशं च विन्यसेः ॥ ९५ ॥ मासं दशसहस्राणि विशुद्धः प्रत्यहं जपेः । राममन्त्रं महामन्त्रं सावधानेन चेतसा ॥९६॥ मासान्ते प्रातरुत्थाय स्नानादीनि विधाय च । पूर्वतो निर्मिते कुण्डे होमं कुर्य्या अतन्द्रितः॥९७॥ ब्राह्मणान् भोजयित्वा च विमुक्तः कल्मषाद्ध्रुवम् । भविष्यसीति भो राजन् पुत्रोऽपि च भविष्यति ॥ ९८ ॥ तेजस्वी विजिताक्षश्च पुरुषार्थपरायणः । परमार्थसमायुक्तः शत्रुसंक्षयकारकः ॥ ९९ ॥ सुन्दरः सरलो विद्वान् वाग्मी धर्मिष्ठ ऐश्वरः । चक्रवर्ती महाबाहू राजशक्तिसमान्वितः ॥ १०० ॥

१ क. ‘ खमास्था ’ ।

स्निग्धः सौजन्यवाङ्लुब्धः प्रजानामनुरञ्जकः । प्रजाप्रियः प्रजापाल पुत्रस्ते प्रभविष्यति ॥ १०१ ॥
इत्येवं गजदेवस्य वचः श्रुत्वा स भूपतिः । प्रसन्नः शिरसा नागं प्रणनाम पुनः पुनः ॥ १०२ ॥
देवस्तु सच तत्रैवाऽकस्मादन्तर्हितोऽभवत् । राजाऽपि प्रययौ तस्माद्धर्षशोकसमन्वितः ॥ १०३ ॥
राजधानीं समागत्य राज्यकार्य्याणि मन्त्रिणि । सन्यस्य प्रययौ शीघ्रं गङ्गाया स्तीर मुत्तमम् ॥१०४॥
गजोक्तविधिना राजा सर्वं चक्रे प्रयत्नतः । शापा त्पापाच्च निर्मुक्तः पुत्रं कालेन चाप्तवान् ॥१०५॥
एवंमाहात्म्यसंयुक्तो राममन्त्रो विशेषतः । मोक्षप्रदो महामन्त्रो मन्त्रराजः प्रशस्यते ॥ १०६ ॥
श्री सीता रामतः प्राप सा ददौ वायुसूनवे । ब्रह्मणे स ददावित्थं मन्त्रराज परम्परा ॥ १०७ ॥
प्रातरुत्थाय ये नित्यं सततं श्रद्धयान्विताः । पठन्तीमां परप्रीत्या मन्त्रराजपरम्पराम् ॥ तेऽपि ब्रह्मपदं यान्ति मुक्त्वा देहामिमं खलु ॥ १०८ ॥

ऋषय ऊचुः—

राममन्त्रस्य माहात्म्यं श्रुत्वा वेदाविदांवर ! कृतार्थाः कृतकृत्याश्च सर्वथैवाऽधुना वयम् ॥ १०९ ॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां कथामुखेन राममन्त्रमाहात्म्यवर्णनं नाम
तृतीयोऽध्यायः ।

### ऋषय ऊचुः—

भगवँस्ते......निपीय वचनाऽमृतम् । तृप्तिर्न जायतेऽस्माकं शुश्रूषा चैव वर्द्धते ॥ १ ॥ अतः श्रोतुं समिच्छामः सकाशात्ते महामुने । वैष्णवैः कीदृशं पुण्ड्रं कार्य्यं विष्णुपरैरिति ॥ २ ॥

### वाल्मीकिरुवाच—

धर्मतत्त्वप्रिया यूय मृषयो ज्ञानवेदिनः । तस्माद्वक्ष्यामि युष्मभ्यं पुण्ड्रं कार्य्यं तु यादृशम् ॥ ३ ॥
चतुर्णामपि वर्णानां यथा ब्राह्मण उत्तमः । सर्वेषामपि धर्माणां तथा वैष्णव उच्यते ॥ ४ ॥
सर्वेषामेव वेदानां पुराणानां च सर्वथा । परहिंसा न कर्तव्याऽत्रैकमत्यं च विद्यते ॥ ५ ॥
अहिंसा परमो धर्मोऽहिंसा हि परमं व्रतम् ! अहिंसा परमं ध्येयं नास्ति धर्म स्ततोऽधिकः ॥ ६ ॥
स एष परमो धर्मः केवलं पृथिवीतले । वैष्णवैः पाल्यते नित्यं तस्माद्वैष्णव उत्तमः ॥ ७ ॥
सुवर्णानि ददानाना मश्वमेधशतानि च । कुर्वाणानां नृणां धर्मो जायते यस्तु नित्यशः ॥ ८ ॥
स धर्मः प्राप्यते नित्यं परहिंसाविवर्जितैः । मानवैस्तु जगत्यास्मिन्नास्ति कोऽप्यत्र संशयः ॥ ९ ॥

वेवेष्टीदं जगत्सर्वं यः स विष्णुः स्मृतो बुधैः । मुच्यते सर्वपापेभ्यो विष्णुसेवापरायणः ॥ १० ॥
वैष्णवा यत्र गच्छन्ति तत्र गच्छन्ति देवताः । स्वयं गच्छाति विष्णुश्च ह्येष वेदार्थसङ्ग्रहः ॥ ११ ॥
गङ्गा च यमुना चैव कावेरी च सरस्वती । सरयू नर्मदा सर्वा स्तीर्थनद्यः प्रयान्त्यपि ॥ १२ ॥
यत्रैव वैष्णवाः सन्ति तत्राऽयोध्या च काशिका । मथुराऽवन्तिका तत्र पुर्य्यः सर्वस्य पाविकाः ॥ १३ ॥
भूतप्रेतपिशाचाद्या ये च राक्षसयोनयः । सर्वे तस्मात्पलायन्ते यत्र गच्छन्ति वैष्णवाः ॥ १४ ॥
रमन्ते योगिनो यस्मिन् स रामः परिकीर्तितः । परिवेष्ट्य स्थितः सर्वं सैव विष्णुः समीरितः ॥१५॥
स[1] एव भगवान् कृष्णो गोपीगोपाऽनुरञ्जकः ॥१६॥ तस्य विष्णो महावाहो भक्तानां पुण्ड्रसङ्ग्रहः ।
उच्यते श्रूयतां सम्यक् सावधानेन चेतसा ॥ १७ ॥ ऊर्द्ध्वपुण्ड्रं सदाकार्य्यं विष्णुभक्तिपरायणैः ।
पातित्यमन्यथा प्राप्य रौरवं नरकं व्रजेत् ॥ १८ ॥ ऊर्द्ध्वपुण्ड्रधरो विप्रो विष्णुध्यानपरायणः ।
वीतपापः स धर्मात्मा स्वर्गलोकं समश्नुते ॥ १९ ॥ हरेः पादाकृतिं कुर्यान्मध्यच्छिद्रसमन्वितम् ।
ऊर्द्ध्वपुण्ड्रं स्वमोक्षाय दुःखनाशाय सर्वथा ॥ २० ॥ आचम्यैवोर्द्ध्वपुण्ड्रं तु विशुद्धया च मृदा सदा ।



१ कपुस्तके नास्त्येष पाठः ।

कुर्य्याश्चाथान्तरालेषु हरिद्राधारणं तथा ॥ २१ ॥ रैवतकाच्चित्रकूटा द्यादवाद्रेश्च वैष्णवाः ।
मृत्तिकाहरणं कुर्य्यु रूर्द्ध्वपुण्ड्राय सर्वदा ॥ २२ ॥ गङ्गायाः सूर्यकन्यायाः सरय्वा वा मृदा सदा ।
ऊर्द्ध्वपुण्ड्रं शुभं कुर्य्यु र्वैष्णवा धर्मरक्षकाः ॥ २३ ॥ पूर्वं सिंहासनं कुर्यु स्ततः पार्श्वद्वयं पुनः ।
ततः पश्चाच्च तन्मध्ये लिखेयुः सुन्दरीं श्रियम् ॥२४॥ रजन्या श्रियमालिख्य मृदा वाऽपि च शुक्लया।
वैष्णवो मुक्ति माप्नोति सर्वकल्मषवर्जितः ॥ २५ ॥

ऋषय ऊचुः—

भगवँस्त्वद्वचः श्रुत्वाऽभवाम च्छिन्नसंशयाः । ऊर्द्ध्वपुण्ड्रस्य भेदोऽन्यः स्याद्यदीह तमप्यलम् ॥
श्रोतु मिच्छाम आख्याहि सर्वसामर्थ्यवानसि[1] ॥ २६ ॥

वाल्मीकि रुवाच—

एकदा सुखमासीनं वैकुण्ठे च रघूत्तमम् । वायुसूनु र्महातेजा ब्रह्मचारी जितेन्द्रियः ॥ २७ ॥
एतादृशान् बहून् प्रश्नान् पप्रच्छ कपिकुञ्जरः । श्रीरामस्तोषयामास तं यथाऽहं तथर्षयः ॥ २८ ॥

१ क 'र्थ्यवन्मुने'।

सर्वं वदामि युष्मभ्यं श‍ृणुध्व मृषिसत्तमाः । तच्छ्रुत्वा च्छिन्नसन्देहा यूयं तेन भविष्यथ ॥ २९ ॥

श्रीभगवद्वचनं हनूमन्तं प्रति—

ऊर्द्ध्वपुण्ड्रस्य भेदास्तु बहवः सन्ति शाश्वताः । तानहं ते वदिष्यामि श्रूयतां कपिकुञ्जर ! ॥३०॥
मद्भक्ता द्विविधाः प्रोक्ताः शुद्धसत्त्वाः सुबुद्ध यः । मामेव केवलं ह्येके भजन्ते जानकीं विना ॥
जानकीसहितं मां तु भजन्ते सर्वदाऽपरे ॥ ३१ ॥ एतेष्वपि च केचित्तु भक्तिमन्तोऽधिकं मयि ।
जानक्यामेव चान्येषां दृढा भक्तिः प्रजायते ॥ ३२ ॥ मदनुरागिणो भक्ता धारयन्ति च न श्रियम्।
सीताभक्ताः प्रकुर्वन्ति मध्ये विन्दुं श्रियं शुभाम् ॥३३॥ येषां सदाऽऽवयोरेव भक्ति र्भवति वै समा ।
ते शुक्लां रक्तवर्णां च दीर्घां विदधाति श्रियम् ॥ ३४ ॥ कृष्णरूपधरं मां ये वैष्णवाः समुपासते ।
ते कृष्णं चापि रक्तं चाप्यूर्द्ध्वपुण्ड्रं सविन्दुकम्॥ कुर्वन्ति च महाभागा भक्तिभावसमन्विताः॥३५॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायामूर्द्ध्वपुण्ड्रनिरूपणं नाम
चतुर्थोऽध्यायः ॥

ऋषय ऊचुः—

महर्षे कृतकृत्याः स्मो निपीय त्वद्वचोऽमृतम् । इदानीं किञ्चिदन्यद्वै जिज्ञास्यं नोऽस्ति हे विभो ॥१॥
वैष्णवानां च सर्वेषां केन केन च कर्मणा । कालक्षेपस्तु कर्तव्य स्तन्मे ब्रूहि समासतः ॥ २ ॥

वाल्मीकिरुवाच—

एकदा तु पुराकाले गिरिजा गिरिजापतिम् । इदमेव परं तत्त्वं पप्रच्छ श्रद्धया युता ॥ ३ ॥ रुद्रस्तु तद्वचः श्रुत्वा ह्यत्यन्तप्रीतमानसः । उवाच वचनं चेदं वैष्णवानां शिरोमणिः ॥ ४ ॥

रुद्रोक्तिः पार्वतीं प्रति—

ब्राह्मे मुहूर्ते चोत्थाय भगवन्नाम संस्मरेत् । ततो बाह्यप्रदेशेषु मलमूत्रे[1] विसर्जयेत् ॥ ५ ॥ सप्तवारं च मृत्स्नाभि र्हस्तौ सम्यग्विशोधयेत् । त्रिवारं सर्वदा कुर्यात्पादयोरपि शोधनम् ॥ ६ ॥ नद्यां वाऽपि सरस्यां वा तटाके वा महाह्रदे । कूपे वा सर्वदा स्नायाच्छुद्धिमिच्छन्द्विजोत्तमः ॥ ७ ॥ द्वादशानू र्ध्वपुण्ड्रांश्च कृत्वा वै संयतेन्द्रियः । सन्ध्याभिवन्दनं कुर्य्यान्मोक्षकामः सदाद्विजः ॥ ८ ॥ धनुर्वाणधरो रामो द्विभुजः श्यामसुन्दरः । जलजाक्षः किरीटी च सीतया सहितः सदा ॥ ध्यानगम्यो[2]

---

१ ख. 'त्रंवि'। २ ख. 'म्यस्तु सन्धेयः'।

नुसन्ध्येयः सर्वश्रीवैष्णवैर्हृदि ॥ ९ ॥ शीतोष्णसुखदुःखेषु मित्रामित्रे प्रियाप्रिये । समः स्याद्वैष्णवो नित्यं ज्ञानयोगरतः शुचिः ॥ १० ॥ अनिशं भगवान् रामो जगन्माता च जानकी । भक्त्या त्वन-न्यया देवि ध्यातो भक्तं प्रपश्यति ॥ ११ ॥ नित्यवैभवसंयुक्तो नित्यलीलापरायणः । नित्यशोभैक-निलयो नित्यकेलिकरः प्रभु ॥ १२ ॥ सर्वस्य जगतः कर्ता भर्ता हर्ता तथैव च । नित्यमुक्तैः समा-कीर्णो हनुमदादिभिः सदा ॥ १३ ॥ सीताशोभितवामाङ्गो रामो राजीवलोचनः । भूनीलेत्यादि-देवीभिः सेविताब्जपदद्वयः ॥ १४ ॥ सर्वात्मा सर्वनामा च शुद्धो बुद्धः सनातनः । सर्वभावमयः स्थायी सर्वगः सर्वदः प्रभुः ॥ १५ ॥ स्वर्णसिंहासनाऽऽसीनः साकेते परमे पदे । नित्यं ध्येयः स तद्भक्तै रेष धर्मः सनातनः ॥ १६ ॥ ततः पश्चान्निराचम्य रामभक्तिसमन्वितः । महोपनिषदं प्रेम्णा मैथिल्याः सततं पठेत् ॥ १७ ॥

गिरिजोवाच—

नाथ ! केयं त्वयाऽऽदिष्टा महोपनिषदश्रुता । मैथिल्यास्तु महालक्ष्म्यास्तन्मे ब्रूहि दयानिधे ! ॥१८॥

१ ‘ध्याता वुभा विमौ भक्त्या देवि भक्तान्प्रपश्यतः । इति ‘क’ पुस्तके पाठः ।

रुद्र उवाच—

श्रृणु देवि प्रवक्ष्यामि नित्यां शुद्धां सनातनीम्। महोपनिषदं वेदविश्रुतां वेदरूपिणीम्॥ १९ ॥

अथ[1] मैथिलीमहोपनिषत्

नित्यां निरञ्जनां शुद्धां रामाऽभिन्नां महेश्वरीम्। मातरं मैथिलीं वन्दे गुणग्रामां रमारमाम्॥ १ ॥

ॐ तत्सत्। रामरूपिणे परब्रह्मणे नमः। अथ ह वैकदा रत्नसिंहासने समारूढां भगवतीं मैथिलीं लाट्यायनः कौञ्जायनः खाडायनो भलन्दनो विल्व ऐलाक्य स्तालुक्ष्य एते सप्त ऋषयः प्रेत्य तामूचुः। भूर्भुवः स्वः। सप्तद्वीपा वसुमती। त्रयो लोकाः। अन्तरिक्षम्। सर्वे त्वयि निवसन्ति। आमोदः। प्रमोदः। विमोदः। सम्मोदः। सर्वा स्त्व ँ सन्धत्से। आञ्जनेयाय ब्रह्मविद्याप्रदात्रि धात्रि त्वां ँ सर्वे वयं प्रणमामहे प्रणमामहे॥

अथ हैनान्मैथिल्युवाच। वत्साः कुशलिनोऽदब्धासोऽ रेपसः किंकामा यूयं प्रत्यपद्यध्वम्॥

ते होचुर्मात र्मोक्षकामैः किं जाप्यं किं प्राप्यं किं ध्येयं किं विज्ञेय मित्येतत्सर्वं नो ब्रूहि॥

---

१ ख. पुस्तकेनास्त्येष पाठः।

सोवाच। राम इत्यक्षरद्वयं जाप्यम्। रिं राम इत्यक्षरत्रयं जाप्यम्। रुं राम इत्यक्षरत्रयंजाप्यम्। रें राम इत्यक्षरत्रयं जाप्यम्। रैं राम इत्यक्षरत्रयं जाप्यम्। रों राम इत्यक्षरत्रयं जाप्यम्। एतदेवहि तारकम्। एतदेव हि बन्धनं बन्धनम्॥ सार्द्धतिस्रो मात्रा ओमित्यत्र। इमानि त्र्यक्षराणि जपंस्तज्जपति॥ त्रीणि वै दुःखानि। आध्यात्मिकमाधिदैविकमाधिभौतिकम्। इमानि त्र्यक्षराणि जपंस्तानि प्रणाशयाति॥ विष्णुलोकात्परे लोके साकेते शुभशंसिनि। राजन्त ँ रामचन्द्रेति जपन् बन्धाद्विमुच्यते जपन्बन्धाद्विमुच्यते॥ इति प्रथमोपनिषत्॥

परात्परतरो निखिलहेयप्रत्यनीकगुणाकरो जगदादिकारणममिततेजोराशि र्ब्रह्मादिदेवै रप्युपास्यः स श्री भगवान् दाशरथिरेव प्राप्यो दाशरथिरेव प्राप्यः॥ इति द्वितीयोपनिषत्॥

सकलजगत्कारणवीजं भक्तवत्सलः स एव भगवाञ्ज्ञेयः स एव भगवाञ्ज्ञेयः॥ इति तृतीयोपनिषत्॥

---

१ क. 'निव'।

ते ह पुनरेनामूचुः। षट्स्वपि मन्त्रेषु कतमो मन्त्रो गरीयान्। कमभिमन्त्र्य स्वकं कल्याणमभिपश्यामः। तन्नो ब्रूहि महेश्वरि ॥

सोवाचैनान्। सर्व एव मन्त्राः सुखप्रदाः शुभप्रदाः क्षेमप्रदा धनप्रदाः। एकमप्यक्षर मुच्चारितं शतजन्मभिरर्जितानि महापातकान्यपि विनाशयति। तत्रापि। षडक्षरो मन्त्रः सर्वोत्कृष्टः। आशुफलप्रदः। सर्वमेव वाञ्छितमभिपूरयति। मोक्षार्थी मोक्षं लभते। स्वर्गार्थी च स्वर्गम्। पुत्रार्थी पुत्रम्। धनार्थी धनम्। विद्यार्थी विद्याम्। यद्यत्कामयते सर्वमग्रतः स्थितमिवाभिपश्यति। ततः स एव सर्वोत्कृष्टः। स एव शिवशरणम्। स एव जाप्यः ॥ इति चतुर्थ्युपनिषत् ॥

इममेव मनुं पूर्वं साकेतपति र्मामवोचत्। अहं हनूमते मम प्रियाय प्रियतराय। स वेदवेदिने ब्रह्मणे। स वशिष्ठाय। स पराशराय। स व्यासाय। स शुकाय। इत्येषोपनिषत्। इत्येषा ब्रह्मविद्या ॥

तेह प्रणम्योचुः। कृतकृत्या वयम्। विदितवेदितव्याः। पूर्णकामाः। संशयाद्वियुक्ताः[1]। त्वं हिमात नून मस्माकं गुरु रस्माकं गुरुः ॥ इति पञ्चम्युपनिषत् ॥ समाप्तोपनिषत् ॥

---

१ क. ‘ मुक्ताः ’।

इमामेवोपनिषदं पठित्वा श्रद्धयान्वितः। सर्वपापविनिर्मुक्त श्चाचार्य्यस्तवनं पठेत् ॥ २० ॥

गिरिजोवाच—

आचार्य्यः क एवासौ स्तोतव्यो योऽत्र कथ्यते।

रुद्र उवाच—

शृणु देवि प्रवक्ष्यामि तत्त्वमत्र सुखावहम् ॥ २१ ॥ सर्वेषामेव मन्त्राणां राममन्त्रः परः स्मृतः। तस्यैव चोपदेष्टारः मुख्याचार्य्या बुधैः स्मृताः ॥ २२ ॥ आचार्य्या बहवोऽभूवन् राममन्त्र-प्रवर्तकाः। किन्तु देवि कलेरादौ पाषण्डप्रचुरे जने। रामानन्देति भविता विष्णुधर्मप्रवर्तकः ॥ २३ ॥ यदा यदा हि धर्मोऽयं विष्णोः साकेतवासिनः। कृशतामेति भो देवि तदा स भगवान् हरिः॥ २४ ॥ रामानन्दयति भूत्वा तीर्थराजे च पावने। अवतीर्य जगन्नाथो धर्मं स्थापयते पुनः ॥ २५ ॥ देशकालानवच्छिन्नो विष्णो धर्मः सुखप्रदः। कालानाच्छादितो ह्येवं सततं सम्प्रवर्तते ॥ २६ ॥ सूर्य्यप्रभो महाकायो विशालाक्षो महामतिः। महावीर्यो महासत्त्वो महातेजा जितेन्द्रियः ॥ २७ ॥

चतुर्णामपि वेदानां वक्ता विद्वाञ्छ्रुतिश्रुतः । सर्वेषामेव शास्त्राणां याथातथ्येन तत्त्ववित् ॥ २८ ॥
अन्तर्यामी महायोगी यतिराजो यतीश्वरः । धर्मात्मा धर्ममूर्तिश्च धर्मरक्षापरायणः ॥ २९ ॥

---

१ यथा ऋग्वेदे—

नित्य श्चाकन्या त्स्वपति र्दमूना उ देवः सविता जजान । भगो वा गोभि रर्यमेमनज्या त्सो अस्मै चारुश्छदयदुतस्यात् ॥
मं. १० अ. ३ सू ३१ मं. ४

अस्यार्थः—(सविता) (देवः) सूर्यभगवान् (उ) इति निश्चये (यस्मै) यं निखिल कल्याण गुणगणोपेतं वक्ष्यमाणं श्रीरामानन्द-स्वामिनं (जजान) उत्पादयामास; तथा च भविष्यपुराणे ' इत्युक्त्वा स्वस्य विम्बस्य तेजोराशिं समन्ततः । समुत्पाद्य कृतं काश्यां रामानन्दस्ततोऽभवदिति'। तं सकललोकस्पृहणीयं (नित्यो) 'न जायते म्रियतेवा' इत्यादिज्ञानवान् जीवसमूहो हनूमदादिनित्यजीव समूहो वा, ( स्वपतिः स्वानां धनानां ) स्वकीयानां धनानां वा पतिः स्वामी राजवर्ग इन्द्रो वा, ( दमूनाः ) दानमना दातृवग इत्यर्थः सर्वो ह्येष समूहः ( चाकन्यात् ) चाकनतु—कामयताम् । वा शब्दः समुच्चये । तथा भगो देवोऽर्यमा देवश्च, ईम् इत्य-नर्थको निपातः, ईदृशंवा तेजस्विनं ' रामानन्दः स्वयं प्रभुः ' इत्यगस्त्यसंहितोक्तदिशा साक्षान्निखिलब्रह्माण्डनायकं भगवन्तं भाष्यकारं ( गोभिः ) स्तुतिरूपाभि र्वाग्भिः ( अनज्यात् ) व्यक्तीकुर्य्यात् । ( उत ) अपि च ( स्यात् ) अन्योऽपि यो देव-गणोऽस्ति ( चारुः ) रमणीयः । सोऽप्यस्मै ( छदयत् ) कामयताम् ॥

( संशोधकः )

ब्राह्मणो ब्रह्मवर्चस्वी ब्रह्मतत्त्वविशारदः। ब्रह्मवेत्ता तपोराशि र्यतीन्द्रो यतिनां पतिः ॥ ३० ॥
सत्यवक्ता सत्यकर्मा सत्यसन्धो दृढव्रतः। शान्तो दान्तः क्षमायुक्तो विजयी दिक्षु विश्रुतः ॥ ३१ ॥
नाभूद्ब्राह्मणः कश्चिद्राममन्त्रप्रवर्तकः। तस्माद्ब्रह्मा कुले जन्म गृहीत्वा भगवान् स्वयम् ॥ ३२ ॥
यत्र स्नात्वा महापापी चापि याति परां गतिम्। तस्मिन्नेव महापुण्ये तीर्थराजे च पार्वति ॥ ३३ ॥
सर्वशास्त्रार्थसम्पन्नः ब्रह्मचारी महाव्रती। त्रिदण्डं[1] धारयन्देवः काश्यां वासं करिष्यति ॥ ३४ ॥
तस्य संस्तवनं देवि महापातकनाशनम् ॥ ३५ ॥

गिरिजोवाच—

रामस्य जगदीशस्याऽयोध्या प्रियतरा मता। तां विहाय कथं नाथ तीर्थराजे मतिः कृता ॥ ३६ ॥
इति नः संशयं छिन्धि तत्त्वविच्छिन्नसंशय।

रुद्र उवाच—

साधु पृष्टं त्वया देवि शृणु तत्त्वं वदामि ते ॥ ३७ ॥



१ क. 'दण्डी'।

एकदा तीर्थराजे हि निर्विण्णो दशवार्षिकः । ब्राह्मणो ब्रह्मतेजस्वी नाम्ना सतु मनःसुखः ॥ ३८ ॥
पितरं मातरं त्यक्त्वा रामभक्तिपरायणः । अनन्यचेतसा तत्र रामचन्द्रं स्मरन् स्थितः ॥ ३९ ॥
प्रायशो भगवद्भक्ता वालरूपं प्रियं प्रभोः । ध्यायन्ति हृदये नित्यं सर्वलोकसुखप्रदम् ॥ ४० ॥
तदेव रूपं स ध्यायं श्चिरकालं तपोऽतपत् । तस्य भक्तिं समालोक्य निर्व्याजामथ सात्त्विकीम् ॥ ४१ ॥
विट्ठलो भगवांस्तत्र रममाणः स्वमायया । प्रादुर्बभूवतं दास मुद्धर्तुं करुणालयः ॥ ४२ ॥
मनः सुखस्तु तं दृष्ट्वा वाल्यादाहूय सन्निधौ । कस्त्वं कस्मात्समायातः सर्वं ब्रूहि ममाग्रतः ॥ ४३ ॥
त्वदीयां सरलां वृत्तिं कान्तिं चाप्यद्भुतामिमाम् । वचनं मोहनं श्रुत्वा प्रीतिः काऽप्यध्यजायत ॥ ४४ ॥
भगवां स्तद्वचः श्रुत्वा किञ्चित्स्मेरमुखोऽभवत् । पश्चाद्विमोहयामास तमन्यै र्वचनैः प्रिये ! ॥ ४५ ॥
प्रश्नं तं सोऽपि विस्मृत्य वालो वालस्वभावतः । हरिणा साकमत्यर्थं मारेभे तत्र खेलितुम् ॥ ४६ ॥
आप्रहरं समाक्रीड्य वैकुण्ठाधिपति र्हरिः । गन्तुमाज्ञापयेत्येतद्वच स्तस्य पुरोऽब्रवीत् ॥ ४७ ॥
अतीवाऽनुभवन्दुःखं विप्रस्त्वेवमुवाच तम् । तात केन प्रकारेण गन्तुं त्वां कथयाम्यहम् ॥ ४८ ॥
हृदये परमो ह्लादो जायते तव दर्शनात् । किन्तु तात ! कथं त्वाऽहं निरोद्धुं शक्नुयामतः ॥ ४९ ॥

गच्छ तात! सुखं तेऽस्तु ब्राह्मणो निर्धन स्त्वहम्। अरण्यौकाश्च किं तुभ्यं प्रयच्छाम्युपहारकम् ॥५०॥
इत्युक्त्वा स च धर्मात्मा कुट्यां गत्वा च विह्वलः। फलमेकं समादाय हस्ते तस्य समार्पयत् ॥ ५१ ॥
हरि र्हस्तं प्रसार्याथ गृहीत्वाऽपि च तत्फलम् । उवाच वचनं चेद मश्रुपूर्णविलोचनः ॥ ५२ ॥
हे तात ! त्वन्मुखाम्भोजविलसच्छब्दरेणवः। सुखयन्ति मनोऽस्माकं तर्पयन्ति च चेतनाम् ॥ ५३ ॥
भगवत्प्रेरणाप्राप्ताऽकस्मिकास्मत्समागमः। शुभाय सर्वदा भूयादित्येवाशास्महे वयम् ॥ ५४ ॥
त्वदीयां मधुरां वाच माचम्यैव मनःसुख। अन्वभावि सुखं यत्त त्स्थायिता मेतु सन्ततम् ॥ ५५ ॥
कौतःकुतस्तु सञ्जातो नदीनौकासमागमः । आगमाय भवेत्तात सुखशान्त्योः सदाऽऽवयोः ॥ ५६ ॥
हारिणा ते स्वभावेन मनःसुख! हृता वयम्। परवन्तः प्रयामोऽतः किं कुर्य्याम विधेःपुरः ॥ ५७ ॥
चञ्चलायां मनोभूमौ जाता या प्रेमवल्लरी। स्मृतिशीतजलेनेयं सेचनीया प्रयत्नतः ॥ ५८ ॥
सत्यमेवासि शान्तात्मन्मनः सुख! मनःसुखः। केवलं ते वियोगोऽस्ति सन्तापाय च मादृशाम् ॥५९॥
अहमप्यस्मि हे तात ब्राह्मण स्तद्वदस्व मे। किं तुभ्यं सम्प्रयच्छामि यत्ते हितकरं भवेत् ॥ ६० ॥



१ ख. 'यैः'

ब्राह्मणोऽप्यवदद्वाच मन्यस्मिञ्जन्मनीह वै । यथाकथञ्चित्सम्बन्ध आवयोः स्याद्‌ध्रुवोऽचलः ॥ ६१ ॥
एवमास्त्विति चोक्त्वा स हरि रन्तर्दधौ किल। गतमोहो द्विजेन्द्रः स दध्यौ किं याचितं मया ॥ ६२ ॥
यदेव बन्धनं छेत्तुं त्यक्त्वा गृह मिहाऽऽगतः । तदेव बन्धनं नूनं मोहात्सम्प्रार्थितं मया ॥ ६३ ॥
पश्चात्तताप धर्मात्मा बह्वित्थं दुःखविह्वलः । अन्नानि न जग्राह निद्रां लेभे नवा निशि ॥ ६४ ॥
भक्तस्य तादृशीं खिन्नां दशां दृष्ट्वा रघूत्तमः। रात्रौ स्वप्ने कुमारायाऽऽत्मानं प्राकटयत्प्रभुः ॥ ६५ ॥
गतबन्धोऽपि भक्तानां निबद्धः प्रेमबन्धनैः । तेनैव बालरूपेण ह्युतपतस्थौ प्रभुः पुनः ॥ ६६ ॥
धर्मात्मानं च तं विप्रं निमग्नं शोकसागरे । सम्यक तोषयामास भगवान् रघुनायकः ॥ ६७ ॥
पूरणाय प्रतिज्ञाया स्तस्या एव हरिः प्रिये ! प्रयागे तीर्थराजे स्वमाहिमानमद्युतत् ॥ ६८ ॥

गिरिजोवाच—

नाथ त्वद्वचनं श्रुत्वा संशयो मे स निर्गतः। ततः परं च किं कार्य्यं वैष्णवै स्तन्निबोधय ॥ ६९ ॥

रुद्र उवाच—

मिथ्यावादो विवादश्च परिहासो वृथाश्रमिः । दुर्जनानां च संसर्गः दर्शनं भाषणं तथा ॥ ७० ॥

द्यूतं मिथ्यापवादश्च हिंसनं परनिन्दनम्। त्याज्यान्येतानि कार्य्याणि वैष्णवैः सात्त्विकैः सदा ॥७१॥
कुर्वन्नेतानि कर्म्माणि सततं वैष्णवब्रुवः। अतिक्रम्य सदाचारं न हरिं प्राप्नुयात्क्वचित् ॥ ७२ ॥
सत्यमेव परो धर्मः सत्यमेव परं तपः। सत्यमेव व्रतं पुण्यं तस्मा त्सत्यं समाचरेत् ॥ ७३ ॥
आचार्य मनुवर्तेत नाऽचरेत्तस्य विप्रियम्। एवं कुर्वन्सदा देवि ! मानवोऽत्र प्रशस्यते ॥ ७४ ॥
इत्येवं पार्वतीं रुद्रः कालक्षेपविधिं पुरा। आदिशत्स च युष्मभ्यं श्रावितोऽद्य महर्षयः ! ॥ ७५ ॥

ऋषय ऊचुः—

श्रुतवन्तो वयं सर्वे धर्ममार्गं महामुने ! त्वत्कृपातः कृपासिन्धो ! कार्तार्थ्यं च गता वयम् ॥ ७६ ॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां कालक्षेपविधिनिरूपणं नाम
पञ्चमोऽध्यायः।

ऋषय ऊचुः—

महाभाग ! श्रुतं सर्व मस्माभि र्भाग्यशालिभिः। संशयोऽत्र विनष्टो नः कृपया ते महामुने ॥ १ ॥
कस्मिं स्तीर्थे च संस्थाने विरक्तै वैष्णवै र्विभो। कालक्षेपः प्रकर्तव्यः कृपया ब्रूहि नोऽधुना ॥ २ ॥

द्यूतं मिथ्यापवादश्च हिंसनं परनिन्दनम्। त्याज्यान्येतानि कार्य्याणि वैष्णवैः सात्त्विकैः सदा ॥७१॥
कुर्वन्नेतानि कर्माणि सततं वैष्णवब्रुवः। अतिक्रम्य सदाचारं न हरिं प्राप्नुयात्क्वचित् ॥ ७२ ॥
सत्यमेव परो धर्मः सत्यमेव परं तपः। सत्यमेव व्रतं पुण्यं तस्मा त्सत्यं समाचरेत् ॥ ७३ ॥
आचार्य मनुवर्तेत नाऽचरेत्तस्य विप्रियम्। एवं कुर्वन्सदा देवि ! मानवोऽत्र प्रशस्यते ॥ ७४ ॥
इत्येवं पार्वतीं रुद्रः कालक्षेपविधिं पुरा। आदिशत्स च युष्मभ्यं श्रावितोऽद्य महर्षयः ! ॥ ७५ ॥

ऋषय ऊचुः—

श्रुतवन्तो वयं सर्वे धर्ममार्गं महामुने ! त्वत्कृपातः कृपासिन्धो ! कार्तार्थ्यं च गता वयम् ॥ ७६ ॥

इति श्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां कालक्षेपविधिनिरूपणं नाम
पञ्चमोऽध्यायः।

---

ऋषय ऊचुः—

महाभाग ! श्रुतं सर्व मस्माभि र्भाग्यशालिभिः। संशयोऽत्र विनष्टो नः कृपया ते महामुने ॥ १ ॥
कस्मिं स्तीर्थे च संस्थाने विरक्तै वैष्णवै र्विभो। कालक्षेपः प्रकर्तव्यः कृपया ब्रूहि नोऽधुना ॥ २ ॥

वाल्मीकि रुवाच—

ऋषयः ! श्रूयतां वच्मि युष्माकं यन्मनीषितम् । वेदेषु यच्च शास्त्रेषु दृष्टं तच्च निशम्यताम् ॥ ३ ॥
अयोध्या परमा पुण्या सर्व पापप्रणाशनी । अखिलेभ्यश्च जन्तुभ्यः सततं मोक्षदायिनी ॥ ४ ॥
अयोध्यायाः पथो रेणु र्यद्युड्डीय शिरो लगेत् । मुच्यते सर्वपापेभ्यो नरो नास्त्यत्र संशयः ॥ ५ ॥
रमया च रमाकान्तो भ्रातृभिः सकलैः सह । हनूमदादिभिः स्वीयैः सर्वैः पारिषदैः सह ॥ ६ ॥
यत्र लीलामयो लीलां कुरुते च निजेच्छया । लोकानां पावनी यत्र सरयू र्भाति नित्यशः ॥ ७ ॥
यस्यामेव निमज्जन्ति चत्वारो भ्रातरः सदा । जगन्माता महालक्ष्मी श्चापि प्रेमपुरस्सरम् ॥ ८ ॥
यज्जलं स्प्रष्टुकामास्ते ब्रह्माद्या देवयोनयः । आकांक्षन्ति भुवो वासं वन्द्या वन्द्यजनैरपि ॥ ९ ॥
एवं गुणयुताऽयोध्या साकेताऽपरनामिका । रामभक्तैः सदा सेव्या तत्पदाकाङ्क्षिभिर्नरैः ॥ १० ॥
नित्या कृष्णपुरी दिव्या कृष्णलीलास्थली च या । यत्र स भगवान् कृष्णो नित्यलीलाकरः प्रभुः
॥ ११ ॥ गोपिकाभिश्च गोपैश्च चिरं चिक्रीड धर्मरक् । सा मथुराऽपि संसेव्या भुक्तिदा मुक्तिदा ध्रुवा
॥१२॥ द्वारका नगरी रम्या यां द्वारीकृत्य मानवाः । अनायासत एवेतः प्रयान्ति परमां गतिम् ॥१३॥

धनुषा च शराभ्यां चाऽङ्कयन्ते ये तत्र मानवाः। शङ्खेन चक्रकेणापि तेऽपि यान्ति परां गतिम्॥१४॥ साऽपि सेव्या नरै र्नित्यं धर्ममोक्षाभिलाषिभिः॥१५॥ संसेव्यो वैष्णवै र्नित्यं यादवाद्रिश्च निश्चलः। यत्र वै[1] भगवान् कृष्णो विजहार स्वमायया ॥ १६ ॥ चित्रकूटश्च संसेव्यो यत्र त्रैलोक्यपावनः। सीतया सहितो रामः सबन्धु र्वासमाकरोत् ॥ १७ ॥ कामदं कामदं यत्र परिक्रामन् नरः सदा। विमुक्तः सर्वदुःखेभ्यः शीघ्रं याति परां गतिम्॥१८॥माया चावन्तिका काञ्ची काशी चापीह मुक्तिदा। एवमादिषु तीर्थेषु वस्तव्यं वैष्णवैः सदा ॥ १९ ॥ प्रयागश्च महापुण्य स्तीर्थराजश्च साक्षयः। यत्र कुत्रापि गङ्गायाः सरय्वाश्च सुखावहे ॥ तटे चापि निवस्तव्यं कालिन्द्या अपि शोभने ॥ २० ॥

ऋषय ऊचुः—

महर्षे वेदयोने ते निपीय वचनाऽमृतम् आपन्ना स्तृप्ति मत्यन्तां वयं तत्त्वबुभुत्सवः ॥ २१ ॥ इदानीं श्रोतु मिच्छाम आश्रमेषु चतुर्ष्वपि। वैष्णवानां विरक्तानां क इति ब्रूहि तत्त्वतः ॥ २२ ॥

वाल्मीकि रुवाच—

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यति स्तथा। अत्र चत्वार एवैते नित्यमाश्रमिणो मताः ॥ २३ ॥

१ ख. 'श्रीभ'।

ब्रह्मचारी द्विधा प्रोक्त उपकुर्वाणकोऽपरः। नैष्ठिकश्च तथा ज्ञेयः सर्वमङ्गलकारकः ॥ २४ ॥ उपकुर्वाणको ज्ञेयो व्रतान्ते स्नातको भवन्। नैष्ठिकस्तु सदाशुद्धः पुण्यचेता जितेन्द्रियः ॥ २५ ॥ भगवन्तं सदा ध्यायन् पुरुषार्थपरायणः। गुरुं शुश्रूषमाणो हि नित्यं गुरुकुले वसेत्। विरक्तो धृत-कौपीनो नैष्ठिकः स निगद्यते ॥ २६ ॥ वेदं वेदौ च वेदान्वा द्विजोऽधीत्य गुरोः कुलात्। दारान् गृह्णाति योवै स सद्गृस्थ इति स्मृतः ॥ २७ ॥ स्वधर्मे वर्तमानास्तु शूद्रा अपि तथा स्मृताः ॥ २८ ॥ तृतीये वयसि प्राप्ते सञ्जाते पुत्रपुत्रके। दारैः सहैकको वापि द्विजो गच्छन् वनं शुभम्। वानप्रस्थः स विज्ञयो ब्रह्मज्ञानपरायणः ॥ २९ ॥ चतुर्थे चाश्रमे तिष्ठन् याति विद्वाद्भि रीरितः ॥ ३० ॥ चतुर्धा यतयः प्रोक्ताः कुटीचकबहूदकौ। हंसः परमहंसश्च धर्मव्रतपरायणः ॥ ३१ ॥ यतीनां वाह्यचिह्नानि गृहीत्वा यस्तु सन् द्विजः। स्वगृहेष्वेव वर्तेत विरक्तः स कुटीचकः ॥ ३२ ॥ गृहं त्यक्त्वा विरक्ता ये भिक्षया धारयन्नसून्। यतिलिङ्गैः समायुक्तः स द्वितीय उदाहृतः ॥ ३३ ॥ तृतीयः शास्त्रसम्पन्नो वेदविद्वेदकर्मकृत्। शरीरे निस्स्पृहो योगी प्राणायामे रतः सदा ॥ ३४ ॥ ब्राह्मणः क्षत्रियो वैश्यः परवैराग्यवान् सुधीः। प्रव्रजन्धार्मिकश्रेष्ठ स्तुरीयः कथ्यते बुधैः ॥ ३५ ॥ काषायं ब्रह्मसूत्रंच

त्रिदण्डं धारयन् यतिः। पुनानः स्वोपदेशेन लोकाँश्च विचरेद्भुवि ॥ ३६ ॥ ये गृहस्था गृहस्थास्ते वैष्णवा धर्मचारिणः। विरक्तानां च विषये श्रूयतां श्रुतिचोदना ॥ ३७ ॥ विरक्ता रामभक्ता ये ते द्विधा समुदीरिताः। केचित्सन्न्यासिनः केचिन्नैष्ठिकब्रह्मचारिणः ॥ ३८ ॥ ये द्विजास्तु कृतोद्वाहा भगवत्पाद माप्नुयुः। विप्लुतब्रह्मचर्यास्ते बुधैः सन्न्यासिनः स्मृताः ॥ ३९ ॥ वाल्यादारभ्य संस्कारो येषा मस्ति च वैष्णवः। द्विजास्तेऽदृष्टसंसारा नैष्ठिकब्रह्मचारिणः ॥ ४० ॥ निर्ममा निरहङ्काराः पञ्चसंस्कारसंयुजः। ये शूद्रा भगवद्भक्तास्ते च भागवताः स्मृताः ॥ ४१ ॥ इति श्रुत्वा महात्मान ऋषयो धर्मवेदिनः। ऊचिरे वचनं चेदं बद्धाञ्जलिपुटा स्तदा ॥ ४२ ॥

ऋषय ऊचुः—

कृतकृत्या वयं भूताः श्रुत्वा ते परमाद्भुतम्। वचनं मुनिराट् तस्माद् दया सिन्धो! विदांवर ॥४३॥ अन्ये ये च सदाचारा वैष्णावानां श्रुतौ स्थिताः। तान्नो ब्रूहि महाभाग करुणैकमहालय ॥ ४४ ॥

वाल्मीकि रुवाच—

गुरु ब्रह्मा गुरु र्विष्णु र्गुरु र्माता गुरुः पिता। गुरु र्बन्धु र्गुरु मित्रं गुरु रेव सुखप्रदः ॥ ४५ ॥

प्रातरुत्थाय शिष्यः स्वगुरोः सम्मुख मागतः । साष्टाङ्गं प्रणमेन्नित्यं परया श्रद्धया ऽन्वितः ॥ ४६ ॥
रुष्टेषु सर्वदेवेषु रक्षतीह रमापतिः । क्रुद्धे रमापतावत्र गुरू रक्षां करोति ह ॥ ४७ ॥
को ऽपि रक्षाकरो नास्ति गुरौ संरुष्टतां गते । ततः सर्वप्रयत्नेन प्रसाद्यो गुरु रञ्जसा ॥ ४८ ॥
पञ्चसँस्कारसंयुक्तो दासान्तं नाम चावहन् । विष्णुभक्तिसमायुक्तो विरक्तो वैष्णवः स्मृतः ॥ ४९ ॥
यो न द्वेष्टि नच द्रोग्धि नाऽनाचारं चरत्यपि । रामभक्तिसमापन्नो विरक्तो वैष्णवः स्मृतः ॥ ५० ॥
यस्तु जातिस्वभावेन पूर्वजन्मार्जितस्य वा । दुष्कर्मणः फलेनैव प्राप्तया दुर्धिया नरः॥ अपराद्विष्फलं द्वेष्टि स वै चाण्डालवैष्णवः ॥ ५१ ॥ विष्णुचिन्हधरान् यस्तु वृथा निन्दति मूर्खराट् । वैष्णवानां समाजात्तु निष्काश्यः स च दुर्मतिः ॥ ५२ ॥ विष्णुभक्तान् समुद्दिश्य दुर्वाच्यं वक्ति यो नरः। मुखं नैव मुखं तस्य पात्रं निष्ठीवनस्य[2] तत् ॥ ५३ ॥ भगवत्सान्निधावेव राममन्त्रस्य दीक्षया । दीक्षणीयः सदा शिष्यो विरागी निश्चलोऽनघः ॥ ५४ ॥ शङ्खचक्रधरो वाऽथ धनुर्बाणाङ्कनं दधत् । सर्वपाप-

१ क. 'सन्नो'। २ ख. 'ष्ठी'।

विनिर्मुक्तः प्रयाति परमां गतिम् ॥ ५५ ॥ धन्वनेति जपन्मन्त्रं शार्ङ्गपाणिं च संस्मरन् । बाहो र्वाम स्य मूले तु धनुषा तापयेद्गुरुः ॥ ५६ ॥ तथा सुपर्णमित्यादि मृजीत इति चादरात् । जपन्द-क्षिणमूले तु बाणाभ्यामङ्कयेत्पुनः ॥ ५७ अतः परं प्रवक्ष्यामि सन्ध्याविधि मनुत्तमम् । ब्राह्मे मूहूर्ते चोत्थाय राम नाम च संस्मरेत् ॥ ५८ ॥ प्रातःकालीन मखिलं कृत्यं कुर्य्यादतन्द्रितः । मलमूत्र-विसर्गाय वहिर्देशं समाश्रयेत् ॥ ५९ ॥ नद्यास्तटे न कर्तव्यं मलमूत्रविसर्जनम् । दन्तान्धावेन्नवा तत्र नोद्गिरेत्पित्तकं कफम् ॥६०॥ प्रवाहे वा तटाके वा विशुद्धे निर्मले जले। देहदोषनिवृत्यर्थं सविधि

१ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रो रपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ यजु० २९ । ३९ ॥

२ सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ यजु० २९ । ४८ ॥

३ ऋजीते परिवृङ्ग्धि नोऽश्मा भवतु न स्तनूः । सोमो अधिब्रवीतु नोऽदितिः शर्म यच्छतु ॥ यजु० २९ । ४९ ॥

४ ख. 'गभीरे निर्म'।

स्नानमाचरेत् ॥ ६१ ॥ सूर्य्यस्य दर्शनात्पूर्वं सन्ध्यां कुर्वीत सद्द्विजः । अन्यथा कुरुते यस्तु ब्रह्महा स भवेद्ध्रुवम् ॥ ६२ ॥ वहिः सन्ध्यां प्रकुर्वीत सकुशः सकलो द्विजः ॥ ६३ ॥ अथ यत्र शुचि र्देशो यत्र स्यान्मनसः सुखम् । तत्रापि सन्ध्यां कुर्वाणो नरः पुण्यपरो भवेत् ॥ ६४ ॥ सूर्य्यस्याभिमुखं तिष्ठन् क्षिपेत्त्रीनुदकाञ्जलीन् । तच्चक्षुरितिमन्त्रस्य पाठं कुर्य्यात्ततः परम् ॥ ६५ ॥ सायङ्काले च सूर्य्येऽस्तं यातिनद्यास्तटे स्थितः । सायं सन्ध्यामुपासीत सततं वैदिको द्विजः ॥ ६६ ॥ श्रीरामः शरणं[1] मेति मन्त्रं सार्द्धशतं जपन् । सन्ध्यानन्तरं, विप्रो मुच्यते सर्वकिल्बिषात् ॥ ६७ ॥ वैष्णवैः सततं धार्य्या श्रीतुलसी द्वियष्टिका । तां त्यजन् पुरुषो मूढो भ्रष्टसंस्कार एव हि ॥ ६८ ॥ यस्य कण्ठे न संलग्ना वैष्णवस्य च दुर्मतेः । तुलसी राजते, सोऽथ नाममात्रेण वैष्णवः ॥ ६९ ॥ तस्य स्पृष्टमवन्नादि न ग्राह्यं वैष्णवैः क्वचित् । दूरं चाण्डालवत्त्याज्यो द्विजकर्मवहिष्कृतः ॥ ७० ॥ भोजनस्य विधिं वक्ष्ये श्रृणुध्वं मुनिसत्तमाः ! । शुद्धे च भोजनागारे स्थाने पीठासने शुभे ॥

---

१ क. 'णेतीमं मन्त्रं'।

उपविश्य सुखं धीमान् कुर्य्याद्भोजनमुत्तमम् ॥ ७१ ॥ पादद्वयेन संस्पृश्य ह्येकेनैव च वा भुवम्। भुञ्जानः सर्वकल्याणं सन्ततं सोऽनुपश्यति ॥७२॥ वक्त्रस्यानुगुणान् पिण्डान् भक्षयेच्च शनैः शनैः। शीघ्रत्वमधिकुर्वाणो राक्षसत्वं निगच्छति ॥ ७३ ॥ शयानो नहि भुञ्जीत नोत्थितोऽपिकदाचन। चलन्नापि न भुञ्जीत न वदन्न हसन् रुदन् ॥ ७४ ॥ भुञ्जानो मौनमालम्बेद्ब्रूयाच्चेन्नाधिकं क्वचित्। अत्यन्तभाषणादन्नदेवः कोपं समेष्यति ॥ ७५ ॥ सदा भोजनकालेतु नरो हृष्टो भवेत् खलु। विषीदँश्चिन्तयन्वापि भोक्ता नान्नफलं लभेत् ॥७६॥ यादृशी भावना यस्याऽशनकाले भवेदिह। तादृशी तस्य वै बुद्धिर्जायते नाऽत्र संशयः ॥७७॥ ब्रह्मवर्चसकामस्तु नित्यं पूर्वमुखो भवन्। सर्वदा मौनमास्थाय भुञ्जीयादिह निश्चलः ॥७८॥ वीर्य्यकामश्च धीकामः सततं पश्चिमाननः। यशस्कामस्तु भुञ्जीयात्...उदङ्मुखः॥७९॥ ग्रासं ग्रसीत सम्पूर्णं साङ्गुष्ठाङ्गुलिभिर्मुदा॥ चप्चपेति न कुर्वीत न चान्यत्राऽवलोकयेत् ॥८०॥ पर्युषितं न भोक्तव्यं विद्यावृद्ध्याभिलाषिभिः। यातयामं गतरसं भोजनं नैव भक्षयेत् ॥८१॥ घृतपक्कं पयःपक्कं शाकं दधितिलानि च। मौद्गानि शुष्कवस्तूनि पर्युषितानि भक्षयेत् ॥८२॥

अभक्ष्यभक्षणाज्ज्ञानात्सद्यः पतति वै द्विजः। भक्ष्याभक्ष्यविचारेण ततो वर्तेत नित्यशः ॥ ८३ ॥
संस्पृष्टं यद्भवेदन्नं लशुनेन पलाण्डुना। तद् द्विजैर्नैव भोक्तव्यं सदाचारपरायणैः ॥ ८४ ॥
लशुनं गृञ्जनं चैव पलाण्डुकवकानि च। कृमिभिर्मक्षिकाभिश्च केशरोमनखैश्च वा ॥ संस्पृष्टं नैव भोक्तव्यमन्नंक्वापि द्विजोत्तमैः ॥ ८५ ॥ गवा घ्रातं च, दृष्टं वा शुना वा शूकरेण वा। अवलीढं न भोक्तव्यं काककुक्कुटमूषकैः ॥ ८६ ॥ छत्राकं च मधूकं च नारिकेलासवं तथा। सुरास्पृष्टं सुरापैश्च स्पृष्टमग्राह्यमेव तु ॥ ८७ ॥ यदन्नमवलोक्यैव हृदि खेदो विजायते। तदन्नं नैव भोक्तव्यं धर्मरक्षापरायणैः ॥८८॥ आपणीयं न भुञ्जीत लवणं तैलसर्पिषी। गुडंच शर्करां हित्वा कदाचन हि वैष्णवैः ॥८९॥ रविवारे दिवा चाथ सप्तम्यां च दिवा निशि। धात्रीफलं न भोक्तव्य मायुष्कामैः कदाचन ॥९०॥ उत्पलं शणशाकं च वाट मौदम्बरं फलम्। श्रेयस्कामो न भुञ्जीया दाश्वत्थं च कदाचन॥९१॥ मधु मांस न भोक्तव्यं धूम्रपानं न कारयेत्। एकादश्यां च सर्वान्नं दूरतो वैष्णवस्त्यजेत् ॥ ९२ ॥
एतान्युक्तान्यभक्ष्याणि समासेन महर्षयः। इदानीं वच्मि युष्मभ्यं भावनाविषये .... .... ॥ ९३ ॥

यादृशी भावना यस्य तादृशं लभते फलम् । सत्यमेतद्धि मन्तव्यं शङ्कालेशो न विद्यते ॥ ९४ ॥
यदि दुःखी नरो नम्रो भूत्वा भगवतः पुरः । शरणं याचते दीनोऽवश्यमुद्धरतीह सः ॥ ९५ ॥
एकस्य ब्रह्मपुत्रस्य सत्यामेव कथामहम् । श्रावयामि च तां यूयं शृणुध्वं ह्येकमानसाः ॥ ९६ ॥
गोदापुरे महापुण्ये स्थाने कश्चिद्द्विजाग्रजः । आसीन्निर्धनो दीनः शोकचिन्तातुरो महान् ॥ ९७ ॥
वेत्ता सर्वशास्त्राणां धर्मतत्त्वविशारदः । गुणवान्रूपवान् सम्यङ् मृदुभाषी दयापरः ॥ ९८ ॥
एकदा स भ्रमन् विप्रो जीविकाहेतवे क्वचित् । शुश्राव कस्यचिद्राज्ञो दातु र्नाम यशस्विनः ॥९९॥
अन्विष्यन् स च तं भूपं ब्राह्मणोऽग्रे चचाल वै । दश क्रोशान् समाक्रम्य प्राप्तवांश्च निशामुखे॥१००॥
तस्मिन्नेव च विख्याते नगरे लोकपूरिते । यत्र दानी महोदारः वसन्नासीत्स भूपतिः ॥ १०१ ॥
रात्रौ श्रान्तः स वै विप्रः कस्मिंश्चिद्देवमन्दिरे । सुखं सुष्वाप शोकाढ्यः क्षुत्पीडापीडितोऽपि सः ॥१०२॥
प्रातरुत्थाय विप्रः स सान्ध्यं कर्म समाप्य च । सम्यग्रामार्चनं कृत्वा जग्राह चरणोदकम् ॥ १०३ ॥
राजासने समासीने तस्मिन्दातरि राजनि । उपेयाय स तं विप्रो यद्यप्यासीद्बुभुक्षितः ॥ १०४ ॥

आशीर्वचोभिः संवर्ध्य राजानं तमुवाच सः । विष्णुभक्तो महाराज विष्ण्वाराधनतत्परः ॥ १०५ ॥
गोदापुरस्य विप्रोऽहं सर्वशास्त्रविशारदः । उत्तमे च कुले जातो भाग्याद्दैन्यमुपागतः ॥ १०६ ॥
केवलं दुःखभोगाय जन्मादाय भ्रमाम्यहम् । श्रुत्वा तव यशो राजन् विह्वलस्ते दिदृक्षया ॥ १०७ ॥
भ्रमन्नेवान्तिके राजँस्तवायातोऽस्मि भाग्यतः । पश्यामि किं भवत्यत्र सुखं वा दुःखमेव वा ॥ १०८ ॥
यो दत्तो नापरेभ्यश्च त्वया शीलवता नृप । तं नकारमपि प्राप्य न हृष्यामि कथं, वद ॥ १०९ ॥
[1]दीनानामाननं द्रष्टुं जगदीशोऽपिनेच्छति । तद्यदित्वमपि प्रार्थ्य प्रार्थनां न शृणोषि मे । कोऽपराध-स्तवात्र स्याच्छ्रेष्ठस्य पथि गच्छतः ॥ ११० ॥ न विचार्य्यमिदं राजन्मे वृथाऽगमनश्रमः । त्वादृशानां परं पुण्यं दर्शनं प्रददाति ह ॥ १११ ॥ धनं द्विधेत्येकमुदर्य्यमुच्यते भवादृशां दर्शनमेव चापरम् । अभून्न लब्धं यदि चादिमं ततः कथं भवेदूनमिदं वदा[2]न्तिमम् ॥ ११२ ॥ येन ते पुण्यपुञ्जेन देहः पुण्यमय स्तव ।

१ खपुस्तके दीनानमित्यस्य तद्यदीत्यस्य च मध्ये ' अतएव जगन्नाथः श्वशुरालयमिच्छति ' इत्याधिकः पाठः । सचके-नचित्प्रक्षिप्त इति प्रतिभाति ॥

२ क, ' तान्ति ' ।

पुण्यात्मना कृतो धात्रा कस्तद्वर्णयितुं क्षमः ॥ ११३ ॥ त्वद्धनं त्वद्घनज्ञानं त्वत्तेजस्त्वत्तपो नृप । अशेषं शेषराजोऽपि वक्तुं शक्नोति न क्वचित् ॥ ११४ ॥ यत्र तत्र तु वारीणि ददात्येव हि वारिदः । चेच्चातकमुखे विन्दु र्नागाद्दोषो घनस्य कः ॥ ११५ ॥ पिपासितो जलाधारं, धूमं दृष्ट्वा बुभुक्षितः । दृष्ट्वा राजानमायान्ति प्रजादैन्यनिवारकम् ॥ ११६ ॥ इत्येवागतवानस्मि राजँस्ते सन्निधावहम् । यथोचितं प्रतीयेत क्रियतां शीघ्रमेव तत् ॥ ११७ ॥ वासराणि व्यतीतानि पञ्च मेऽनश्नतः किल । ततो न स्थातुमीशेऽहं पीडितो हि बुभुक्षया ॥ ११८ ॥ ब्राह्मणस्य वचः श्रुत्वा किञ्चिन्नोवाच भूपतिः । ततः प्रत्याजगामाशु स विप्रो राममन्दिरम् ॥ ११९ ॥ तत्र गत्वा महादीनो विवर्णवदनो द्विजः । अञ्जलिं मस्तके न्यस्य रुदन्नेव पपात सः ॥ उवाच वचनं चेदं ह्यवरुद्धगलोऽपि स ॥ १२० ॥ रे दैव ! पापाधम ! चिन्त्यतेऽद्य लाभः स्वकीयो वद मे वधे कः । लाभोऽपि चेदस्तु वधे द्विजस्य पापं महन्मूढ न पश्यसि त्वम् ॥ १२१ ॥ किं तेऽपराद्धं भ्रमतोऽपि तथ्यं वदेति साक्ष्यं ददतात्मनस्त्वम् । येन प्रकोपोऽस्ति मयि त्वदीयो ज्वलन्महाकालविबुद्धवह्निः ॥ १२२ ॥ हा राम ! रामोऽसि यदि, त्वमद्य प्राणान्

गृहीत्वा मम पञ्च नीचान् । एकं तु मृत्युं कृपया प्रयच्छ त्वदीयमौदार्य्यमितिप्रसिद्धम् ॥ १२३ ॥ हे जानकि त्वं जननी मदीया सदाऽम्ब ! धत्से हृदि वत्सलत्वम् । अतस्तवाग्रेऽपि तथैव याचे प्रदेहि मे मृत्यु मिहैव मातः ! ॥ १२४ ॥ एवंच विकलं दृष्ट्वा स्वभक्तं भक्तवत्सलः । वालरूपं समादाय प्रादुर्भूतो महाप्रभुः ॥ ॥ १२५ ॥ माता च जानकी तत्र दिव्यरूपधराऽनघा । नितरां करुणामूर्ति राविर्भूता महेश्वरी ॥ १२६ ॥ उत्थाप्याशु च तं दीनं पतितं भुवि विह्वलम् । उरसा योजयामास भगवान् भक्तभावनः ॥ १२७ ॥ माता च जानकी तत्र पतितं तमनाथवत् । तोषयामास सदया शिरस्याघ्राय, तं पुनः ॥ १२८ ॥ उवाच भगवांस्तत्र वत्स ! ब्रूहि किमिच्छसि ! किमर्थं शोचसे नित्यं भक्तो भूत्वा मम प्रियः ॥ १२९ ॥ सततं त्वामहं वत्स ! संस्मरामि क्षणे क्षणे ! क्षणमेकमपि प्रेष्ठ ! त्वां विनाऽहंन जानकी ॥ १३० ॥ केवलं ते परीक्षाया इदंव्यापारवानहम् । ब्रूहि प्रिय ! प्रिय ! ब्रूहि वत्स ! ब्रूहि किमिच्छसि ॥ १३१ ॥ वक्तव्यं किं न वक्तव्यं किन्नु कर्तव्य मित्य-

लम् । तदानीं तस्य विप्रस्य नासीद् ज्ञानं किमप्यथ ॥ १३२ ॥ ययो रजः कणं प्राप्तुं तपन्ति परमं तपः । ऋषयो मुनयश्चैव देवा देवपति श्च तौ ॥ १३३ ॥ प्रेमाश्रुभिः प्रभोः पादौ क्षालयन् ब्राह्मणः स च । आनन्दाम्बुनिधौ मग्नः पादयोर्हि लुलोठ सः ॥ १३४ ॥ दीनबन्धु र्जगन्नाथो भगवान् भक्तभावनः । बलादुत्थाप्य तं दासमुरसाऽऽश्लिष्य स प्रभुः ॥ १३५ ॥ उवाच वचनं चेदं मधुरं मधुराक्षरम् । शोकं जहाहि सकलं वत्स ! गच्छ गृहं पुनः ॥ १३६ ॥ सकलैव च सम्पत्ति र्वर्तते ते गृहेऽधुना । गत्वा तत्र सुखेनैव तिष्ठ त्वं यावदिच्छसि ॥ १३७ ॥ ततः परं परतरं मदीयं लोकमाप्स्यसि । गच्छाऽधुना गृहं तात ! वचो मे परिपालय ॥ १३८ ॥ सोऽपि द्विजवरः शीघ्र मुत्थायाऽऽकुलमानसः । साष्टाङ्गं प्रणिपत्याथ स्वाञ्जलिं न्यस्य मस्तके ॥ १३९ ॥ प्रार्थयामास धर्मात्मा धर्ममूर्तिं जगत्पतिम् । हे हे नाथ कृपासिन्धो ! भक्तदुःखनिवारक ॥ १४० ॥ किं कर्तव्यविमूढोऽहं दह्यमानः शुगाग्निना । शोकसागरनिर्मग्न उद्धृतोऽस्मि त्वया प्रभो ! ॥ १४१ ॥ परमन्यदिदं याचे तत्पूरय कृपानिधे ! प्रत्यहं वर्धतां नाथ ! भक्तिर्मे तव पादयोः ॥१४२॥ तव भक्तिं

विना नाथ जगन्नाथ दयानिधे । क्षणमेकं न तिष्ठानि यथा कुरु तथा प्रभो ॥१४३॥ कृपामूर्ते महादेवि जगन्मात र्महेश्वरि । तवाग्रेऽप्येतदेवाहं प्रार्थये भक्तवत्सले ॥ १४४ ॥ आशीर्वचन मादाय तयो र्देवातिदेवयोः । प्रेमाश्रुपूर्णनयनः प्रणनाम पुनः पुनः ॥ १४५ ॥ सर्वथाऽऽश्वास्य तं दासं प्रत्यहं स्वस्य दर्शनम् । प्रतिज्ञाय महाराजः सश्रीसीतास्तिरोदधे ॥ १४६ ॥ एवंच भावनागम्यो भगवान्नृषयः सदा । भक्तरक्षाविधानाय सचेष्टः किल वर्तते ॥ १४७ ॥ अनन्यश्रद्धया रामं भजन्तं मानुषं सदा । भजते रामचन्द्रोऽपि कृपासिन्धुः कृपामयः ॥ १४८ ॥ तस्माद्विशुद्धभावेन स्मर्तव्यः स परः पुमान् । तथा च ध्यायतां पुंसां सकला ऋद्धिसिद्धयः ॥ १४९ ॥ जन्ममृत्यू न बाधेते स्मरतः पुरुषं परम् । तस्मात्प्रत्यहमुत्थाय तत्परो वैष्णवो भवेत् ॥ १५० ॥ श्रवणं मननं चापि निदिध्यासनमेवच । दर्शनं स्पर्शनं चैव क्रमेणासञ्जनं तथा ॥ १५१ ॥ धर्मार्थमोक्षलिप्सूनां यतीनां ब्रह्मचारिणाम् । पुरुषार्थप्रदा एते षट् सोपानाः प्रकीर्तिताः ॥ १५२ ॥ एकान्ते च नदीतीरे ह्यथवा शून्यमन्दिरे ।

रामं र. ोवपत्राक्षमेकाकी सर्वदा स्मरेत् ॥ १५३ ॥ विमुक्तिकामा अपि भुक्तिकामा स्तमेव तेऽन-न्यधियो भजन्ति । उपास्य तं चैव परं पुमांसं परात्परं ब्रह्मपदं व्रजन्ति ॥ १५४ ॥

इतिश्रीपाञ्चरात्रे श्रीमद्वाल्मीकिसंहितायां प्रकीणविषयनिरूपणं नाम

षष्ठोऽध्यायः

समाप्तेयं श्रीमद्वाल्मीकिसंहिता.

श्री आदश प्रिन्टींग प्रेसमां,
शाह वाडीलाल डाह्याभाई पंडिते छाप्युं;
पांचकुवा नवा दरवाजा—अमदावाद.

